स्यष्टम्। अङ्कितः। अञ्चितः। कुण्ठितः। शान्तः। गुम्फितः। कुर्वन्नित्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे तस्यासिद्धत्वान्न णत्वम्।

### वा पदान्तस्य। ८। ४। ५९।

पदान्तस्याऽनुस्वारस्य यथि परे परसवर्णो वा स्यात्। त्वङ्करोषि—त्वं करोषि। सँय्यन्ता—संयन्ता। सँव्वत्सरः-संवत्सरः। यँल्लोकम् यंलोकम्। अत्राऽनुस्वारस्य पक्षेऽनुनासिका यवलाः।

### मो राजि समः क्वौ (१५)। ८। ३। २५।

क्विबन्ते राजतौ परे समो मस्य मएव स्यात्। सम्राट्।

### हे मपरे वा। ८। ३। २६।

मपरे (१६) हकारे मस्य मएव स्याद्वा। ह्मल ह्मल सञ्चलने। किम्ह्मलयति—किंह्मलयति। * यवलपरे (१७) यवला वेति वक्तव्यम्*।

### यथासंख्यमनुदेशः समानाम्। १। ३। १०।

---

(१५) सम इति। राजीति किं संयत्। सम इति किम् इदं राट् कारिति किं संरेजे मकारस्य मकारभावोऽनुस्वारनिवृत्त्यर्थः।

(१६) मपरे इति बहुव्रीहिः। उदाहरणेन तदेवाह किम्ह्मलयतीति।

(१७) यवलाः परे यस्मात् स यवलपरस्तस्मिन् हकारे मस्य यवला भवन्तीत्यर्थः।

समसम्बन्धी(१८) विधि र्यथासंख्यं (१९) स्यात्। किंह्यः—किँय्ँह्यः। किंह्मलयति किँव्ँह्मलयति। किंह्लादयति, किँल्ँह्लादयति

## नपरे नः। ८। ३। २७।

नपरे हकारे मस्य नः स्याद्वा। किंह्नुते। किन्ह्नुते।

## ङ्णोः कुक्टुक् शरि। ८। ३। २८।

ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि। कुक्टुकोरसिद्धत्वाज्जश्त्वम्। *चयो द्वितीयाः (२०) शरि पौष्करसादेरिति वाच्यम्*। प्राङ्-षष्ठः प्राङ्क्ष्—षष्ठः—प्राङ्ख्षष्ठः। सुगण्ट् षष्ठः सुगण्ठ षष्ठः सुगण् षष्ठः।

## डः सि धुट्। ८। ३। २९।

---

(१८) समसम्बन्धीति। समकक्षत्वं विभागमिति तु नोक्तं तथा सति यत्नोद्दिष्टेषु समानं विधानं पाद्यादिषु पित्रादीनां प्रियस्थिरादिषु च प्रस्थादीनां तत्रैव यथाक्रमं प्रवृत्तिः स्यात् दृश्यते तु चतुर्थाद्ययोरपि यथासंख्यता समूलकतजीवेषु हनक्रषपिष इत्यादिषु। समानामिति किं लघुर्थित्वान्तेतस्मात् अर्थवत्याद्यो यथायोऽर्थः प्रस्थाद्यस्तु त्रयएव तत्र सर्वेषां सर्वत्र वर्णप्रथमीवसंज्ञा यथा स्यात्।

(१९) यथेति येनैव क्रमेण पदानां ज्ञानं पदार्थोपस्थितिर्वा तेनैव क्रमेण वाक्यार्थबोधसम्बन्धोपस्थितिरर्थः।

(२०) चय इति शरि परे चयप्रत्याहारस्थाने स्वस्ववर्गद्वितीया भवन्ति पौष्करसादेराचार्यस्य मते इति वाच्यम् पुष्करे तीर्थविशेषे सीदतीति पुष्करसद् तस्यापत्यमितीञि विपरतत्वो पौष्करसादिस्तस्यार्थः।

डात्परस्य सस्य (२१) धुट् वा स्यात् । षट्त्सन्तः षट्सन्तः ।

**नश्च । ८ । ३ । ३० ।**

नकारान्तात्सस्य (२२) धुट् वा स्यात् । सन्त्सः । सन्सः ।

**शि तुक् । ८ । ३ । ३१ ।**

नस्य पदान्तस्य शे परे तुग्वा स्यात् । शश्छोऽटीति (६२ पृ०) छत्वविकल्पः । पक्षे झरो झरीति (४३ पृ०) चलोपः । सञ्छम्भुः-सञ्च्छम्भुः-सञ्च्शम्भुः-सञ्शम्भुः ।

ञछौ ञचछा ञचशा ञशाविति चतुष्टयम् ।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ।

**ङमो ह्रस्वादचि ङमुण्नित्यम् ।८।३। ३२ ।**

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात् (२३) परस्याऽचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ।

---

(२१) डः सीति । सीति सप्तमी षष्ठ्यर्थे तदाह सस्येति पद इत्यनुवर्तमानस्य सम्बन्धितया डकारेणान्वयः ।

(२२) नकारान्तादिति डमि च पदे इत्यतः पदे इत्यनुवृत्तं पञ्चम्या विपरिणम्यते अपदान्तनकारस्याऽनुस्वारविधानात्-पदान्तादित्यर्थलभ्यं वा ।

(२३) पदे इत्यनुवृत्तं ङमान्ताधिकरणस्यानुरोधेन पञ्चम्या विपरिणमय्य तस्मादिति तथाच ङम इति पदं ङमन्तपरं बोध्यत्वात् पदार्थैकदेशे ङमि ह्रस्वादित्यस्यान्वयः । ततश्च ङम् इति प्रथमं ह्रस्वादिति विशेषणीभूतमनुभूय पश्चात् पदे विशेषणमाप्नोति

### समः सुटि । ८ । ३ । ५ ।

समो रुः स्यात् सुटि । अलोऽन्त्यस्य (२८सू०) ।

### अत्राऽनुनासिकः पूर्वस्य तु (२४) वा ।८।३।२।

अत्र रुप्रकरणे रोः पूर्वस्याऽनुनासिको वा स्यात् ।

### अनुनासिकात्परोऽनुस्वारः । ८ । ३ । ४ ।

अनुनासिकं (२५) विहाय रोः पूर्वस्मात् परो ऽनुस्वारागमः स्यात् । खरवसानयोर्विसर्जनीयः (४६सू०) ।

### विसर्ज्जनीयस्य सः । ८ । ३ । ३४ ।

खरि(२६) विसर्जनीयस्य स स्यात् । एतदपवादेन वा शरीति (७२सू०) पाक्षिके विसर्गे प्राप्ते । *सम्पुङ्कानां सो वक्तव्यः(२७)* । संस्स्कर्त्ता-सँस्स्कर्त्ता । समो वा लोपमेके इति भाष्यम् । लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं

---

ङम इति पञ्चमीबलात् अचीति सप्तमी षष्ठ्यर्थे तदाह अच इति ङमन्तं पदमिति किम् अनितोऽप्यादौ मा भूत् ।

(२४) अत्र रुप्रकरण एवास्य सम्बन्धो नत्वन्ये ढ्लोपे इत्यादाविति सूचनार्थं, परस्य नित्यं रुत्वम् पूर्वस्य तु वानुनासिक इतिद्योतनार्थं च इह तुशब्दः प्रयुक्त इति द्रष्टव्यम् ।

(२५) अनुनासिकादिति ल्यब्लोपे पञ्चमीत्याह अनुनासिकं विहायेति ।

(२६) मण्डूकप्लुत्या खरवसानयोरित्यतः खरीत्यनुवर्त्त्याह खरीति अव-सानस्यानुवृत्तौ विसर्गविधेर्निर्विषयत्वापत्तेस्तत्परित्यागः ।

(२७) सो वक्तव्य इति समः सुटीति, पुमः खय्यम्परे इति, नश्छव्यप्रशा-

रूपद्वयं द्विसकारमूलमेव। तत्रानचि चेति (१२पृ०) सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम्। अनुस्वारविसर्गजिह्वामूलीयोपध्मानीयानामकारोपरि (२८) शर्षु च पाठस्योपसंख्यातत्वेनाऽनुस्वारस्याप्य (२९) च्त्वात्। अनुनासिकवतां त्रयाणां* शरः खय* इति※ द्वित्वे षट्। अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश। एषामष्टादशानां तकारस्य द्वित्वे वचनान्तरेण (३०) पुनर्द्वित्वे तु एकतं द्वितं त्रितमिति चतुःपञ्चाशत्। अणोऽनुनासिकत्वेऽष्टोत्तरशतम्।

## पुमः (३१) खय्यम्परे। ८। ३। ६।

अम्परे खयि पुम्शब्दस्य रुः स्यात्। व्युत्पत्तिपक्षे(३२)ऽप्रत्यय-

---

मिति च सूत्रद्वये सकारः प्रश्लिष्यते तथा च तैः सूत्रैः स एव विधीयते न तु रुत्वेन सकारस्यासिद्धतया रुत्वाभावेन विसर्गाप्रवृत्तिरिति भावः।

(२८) अकारोपरीति इकारोपरीतिपाठे तु पयःसु यशःस्वित्यादौ इण्परत्वेन षत्वप्रसङ्ग इति भावः।

(२९) अनुस्वारस्यापीति अपिना विसर्गादेः संग्रहः सर्वेषामच्त्वे फलं भवति विष्णुः करोतीत्यादौ यण्प्रसङ्गः स्थिपादीस्यत्वेन यथादिकं प्रत्यनुस्वारविसर्गादीनामसिद्धिः।

※ शरः परस्य खयो द्वे वा इति ८।४।४७ सूत्रस्य वार्त्तिकार्थः।

(३०) एकस्मिन् लक्ष्ये एकवचनस्य सकृदेव प्रवृत्तेर्नियमादाह वचनान्तरेणेति तेन अचो रहाभ्यामिति (२८पृ०) द्वित्वे कृतेऽपि यणोमय इति (२६पृ०) द्वित्वकरणे न बाधकमिति भावः।

(३१) पुम इति संयोगान्तलोपे कृतेऽपि पदस्यानुकरणमिदम् अम्परे इति बहुव्रीहिः।

(३२) व्युत्पत्तिपक्ष इति उणादीनामव्युत्पन्नत्वं व्युत्पन्नत्वं चेत्युभयमप्याकरे स्थितं

स्येति सत्वपर्युदासात्+क≍पयोः प्राप्तौ, अव्युत्पत्तिपक्षे तु सत्वप्राप्तौ।*संपुंकानामिति सः(१६४०)। पुंस्कोकिलः। पुंस्पुत्रः-पुँस्पुत्रः। अम्परे किम्। पुंक्षीरम्। खयि किम् पुंदासः। *ख्याञादेशे न *। पुंख्यानम्।

नश्छव्यप्रशान्। ८। ३। ७।

अम्परे छवि नकारान्तस्य पदस्य रुः स्यात्। न तु प्रशान्शब्दस्य। विसर्गः सत्वं श्चुत्वम्। शार्ङ्गिँश्छिन्धि शार्ङ्गिंश्छिन्धि। चक्रिँस्त्रायस्व चक्रिंस्त्रायस्व। पदस्य किम् हन्ति। अम्परे किम्। सन्त्सरुः खड्गमुष्टिः। अप्रशान् किम् प्रशान्तनोति।

नॄन् (२२) पे। ८। ३। १०।

नॄनित्यस्य रुः स्याद्वा पकारे परे।

कुप्वोः+क≍पौ च। ८। ३। ३७।

---

तत्र व्युत्पत्तिपक्षे प्रकृतिप्रत्ययविभागसद्भावेन पूञो डुम्सुनिति डुम्सुनि कृते सिद्धे पुंस् इति शब्दस्य सान्तप्रत्ययान्ततया इदुदुपधस्य चाप्रत्ययस्येति सूत्रे प्रत्ययावयवभिन्नस्य रोः स्थाने सत्वविधानेनात्र तस्याप्रवृत्तेः कुप्वोः+क≍पाविति सूत्रेण विधेययोः+क≍पयोः प्रसङ्ग इति भावः। अव्युत्पत्तिपक्षे त्विति तत्पक्षे प्रकृतिप्रत्ययविभागाभावादिति भावः सत्वेति इहानुनासिकपक्षे, अनुस्वारपक्षे तु कुप्वोरित्यस्यैव प्राप्तिः अनुस्वारव्यवधानेन उदुपधत्वाभावात्।

(२२) नॄनिति द्वितीयान्तानुकरणं सौत्रत्वात् षष्ठ्या लुक्, सौत्रत्वादेव नलोपो न। एवं कानित्यत्रापि। नकारगताकार उच्चारणार्थः।

रपवाद इति सः । काँस्कान् कांस्कान् । कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालम् । आकृतिगणोऽयम् ।

## संहितायाम् (३९) । ६ । १ । ७२ ।

इत्यधिकृत्य ।

## छे च । ६ । १ । ७३ ।

ह्रस्वस्य (४०) छे परे तुगागमः स्यात्संहितायाम् । तुक्स्यासिद्धत्वाज्झल्त्वेन दः । ततश्चुत्वस्यासिद्धत्वात्पूर्वं श्चुत्वेन जः । तस्य चर्त्वेन च । श्चुत्वस्यासिद्धत्वाच्चोःकुरिति (१६५४०) कुत्वं न । शिवच्छाया स्वच्छा (४१) ।

## आङ्माङोश्च । ६ । १ । ७४ ।

एतयोश्छे परे तुक् स्यात् । पदान्ताद्वेति (७।४०) विकल्पापवादः । आच्छादयति । मा च्छिदत् ।

## दीर्घात् ६ । १ । ७५ ।

---

स्कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः साद्यस्कः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालम् बर्हिष्पलम् यजुष्पात्रम् अयस्कान्तः तमस्काण्डः मेदस्पिण्डः भास्करः अहस्करः । आकृतिगणोऽयम् ।

(३९) संहितायामिति स्वारविकारमात्राविभक्तिभेदोच्चारणं संहिता तत आधिक्यं नैवैतदधिकारयोक्तमशक्तिरिति द्रष्टव्यम् ।

(४०) ह्रस्वस्य पिति कृति तुगित्यतः ह्रस्वस्येति पदं तुक्पदं चानुवर्त्तते ह्रस्वस्येति तुगागमः इति च ।

(४१) समर्थे समपदे शतेः के साभ्यमद्यो निर्मले स्वः ।

दीर्घाच्छे परे तुक् स्यात्। दीर्घस्यायं (४२) तुक् न तु छस्य सेनासुराच्छायेति (२८८पृ०) ज्ञापकात्। चेच्छिद्यते।

**पदान्ताद्वा। ६। १। ७६।**

दीर्घात् (४३) पदान्तात् छेपरे तुग्वा स्यात्। लक्ष्मीछाया-लक्ष्मीच्छाया।

हल्सन्धिप्रकरणम्।

---

(४२ दीर्घादिति षष्ठ्यर्थे पञ्चमी तदाह दीर्घस्यायमिति पञ्चम्यन्तार्थकत्वे तुकः कित्त्वेन छकारोत्तरत्वमेव स्यात् तथा च सुराच्छायेति निर्देशो न स्यादिति भावः।

(४३) दीर्घात् पदान्तादित्यस्य दीर्घस्य पदान्तस्येत्यर्थः।

विसर्जनीयस्य (१) (६६४०) सः। विष्णुस्त्राता।

## शर्परे विसर्जनीयः। ८। ३। ३५।

शर्परे (२) खरि विसर्जनीयस्य विसर्जनीयो न त्वन्यत् (३)। कःत्सरुः। घनाघनः क्षोभणः। इह यथायथं सत्वं जिह्वामूलीयश्च न।

## वा शरि। ८। ३। ३६।

शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात्। हरिः शेते-हरिश्शेते। *खर्परे शरि वा विसर्गलोपो वक्तव्यः*। रामः-स्थाता—राम-स्थाता। हरिः-स्फुरति—हरिस्फुरति। पक्षे विसर्गे सत्वे च त्रैरूप्यम्। कुप्वोः ≍क ≍पौ च (पृ०६८४०)। क+करोति—कः करोति। क+खनति—कः खनति। क≍पचति—कः पचति।

## सोऽपदादौ। ८। ३। ३८।

विसर्जनीयस्य सः स्यादपदाद्योः (४) कुप्वोः परयोः। * पाश-

---

(१) विसर्जनीयस्येति प्रागव्याख्यातमपि विसर्जनीयपदानुवृत्तिप्रदर्शनाय कारितम्।

(२) शर्परे इति बहुव्रीहिः विशेषणञ्च खर्यभिमतोः सामान्यात् विसर्जनीयादिनः परेऽसत्वाद करोति।

(३) विसर्गस्य विसर्गविधौ फलनाद न स्यादिति अन्यदेव विहितोति दर्शितमादि।

(४) अपदाद्याविति। ... कुप्वोर्विशेषणत्वादाद्यपदाद्योरिति।

कल्पककाम्येष्विति(५) वाच्यम् * । पयस्पाशम् । यशस्कल्पम् । यशस्कम् । यशस्काम्यति । अनव्ययस्येति (६) वाच्यम् * । प्रातः कल्पम् । काम्ये रोरेवेति वाच्यम् * । नेह । गीः-काम्यति ।

## इणः (७) षः । ८ । ३ । ३९ ।

इणः परस्य विसर्गस्य षकारः स्यात्पूर्वविषये । सर्पिष्पाशम् । सर्पिष्कल्पम । सर्पिष्कम् । सर्पिष्काम्यति ।

## नमस् (८) पुरसोर्गत्योः । ८ । ३ । ४० ।

गतिसंज्ञयोरनयोर्विसर्गस्य सः कुप्वोः परयोः । नमस्करोति । साक्षात्प्रभृतित्वात् (पृ०१७४सू०) कृञो योगे विभाषया गतिसंज्ञा । तदभावे नमःकरोति । पुरोऽव्ययमिति (पृ०१७१सू०) नित्यं

---

(५) पाशकल्पेत्यादि सम्भवप्रदर्शनार्थं न तु परिगणनार्थमन्यस्यासम्भवादिति बोध्यम् ।

(६) अनव्ययस्येति अव्ययीभावातिरिक्ताव्ययभिन्नस्येत्यर्थस्तेन उपपयस्काम्यतीत्यादौ सत्वम् । शब्देन्दु० ।

(७) इण इति । सर्पिष्पाशमित्यादौ इदुदुपधस्येत्यनेन (पृ०७४सू०) प्रत्ययस्यतया षत्वाप्राप्तौ तद्बाधनाय गीष्पाशं दोष्पाशमित्यादौ षत्वार्थञ्चेदं सूत्रं प्रवृत्तम् । अत्रानव्ययस्येति अपदादाविति काम्ये रोरिति च सम्बध्यते । तेन उच्चैःकल्पम्, दोः पाश, गीःकाम्यतीत्यादौ न भवम् । अतएवास्मिन् प्रकरणे सर्वत्र सत्वमेव विधेयं तस्यैव इण उत्तरत्वे विसर्गस्थानिकत्वेन षत्वमिति भाष्ये स्पष्टम् । शब्देन्दु० ।

(८) नम इत्यादि अत्र अपदादाविति न सम्बध्यते व्याख्यानात् तेन नमस्कारोतीत्युदाहरणसङ्गतिः ।

गतिसंज्ञा। पुरस्करोति। अगतित्वान्नेह। पूः पुरौ पुरः प्रवेष्टव्याः।

### इदुदुपधस्य (९) च प्रत्ययस्य। ८।३।४१।

इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः। निष्प्रत्यूहम्। आविष्कृतम्। दुष्कृतम्। अप्रत्ययस्य किम्। अग्निः करोति। वायुः करोति। एकादेशशास्त्रनिमित्तकस्य (१०) न षत्वम् कस्कादिषु (पृ०६८पृ०) भ्रातुष्पुत्रशब्दस्य पाठात्। तेनेह न मातुःकृपा। * मुहुसः प्रतिषेधः *। मुहुःकामा।

### तिरसोऽन्यतरस्याम्। ८।३।४२।

तिरसः (११) सो वा स्यात् कुप्वोः। तिरस्कर्त्ता। तिरःकर्त्ता।

### द्विस्त्रिश्चतुरिति कृत्वोऽर्थे। ८।३।४२।

कृत्वोऽर्थे वर्त्तमानानामेषां विसर्गस्य षकारो वा स्यात् कुप्वोः।

---

(९) इदुदुपधस्येति इदुतौ उपधे यस्य समुदायस्य तस्यावयवीभूतस्य विसर्गस्य ष इत्यर्थः अप्रत्यय इति पर्युदासो नञ्समासात् प्रत्ययपदञ्च प्रत्ययसम्बन्धिपरं तथा च प्रत्ययसम्बन्धिभिन्नस्येति विसर्गविशेषणम्। तेन कविभिः कृतमित्यादौ इदुपधस्यापि विसर्गस्य प्रत्ययसम्बन्धित्वात् न षत्वं सम्बन्धित्वञ्च अवयवित्वेन स्थानित्वेन वेत्यन्यदेतत्।

(१०) एकादेशेति एकादेशशास्त्रनिमित्तोऽतः (११२पृ०) परत्वस्थानिकत्वेन विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वं बोध्यम्। इदुदिति तपरकरणं किं गीःकाम्यति पूःकाम्यतीत्यादौ दीर्घोपधे मा भूत्।

(११) तिरस इति गतिसंज्ञकमात्रस्यैव न ग्रहणं तेन अन्तर्द्धावेव तिरसो गतित्वेन (२७४पृ०) पराभवार्थकतिरस्कारप्रयोगेऽपि भवत्येव।

परयोः। सर्पिष्कुण्डिका। अनुत्तरपदस्थस्य किम्। परमसर्पिः कुण्डिका। कस्कादिषु (१८४०) सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थो व्यपेक्षायां नित्यार्थश्च।

**अतः (१५) कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। ८। ३। ४६।**

अकारादुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात् करोत्यादिषु परेषु नतूत्तरपदस्थस्य। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्पात्रम्। अयसः सहिता कुशा अयस्कुशा। अयस्कर्णी। अतः किम् गीःकारः। अनव्ययस्य किम्। स्वःकामः। समासे किम्। यशःकरोति। अनुत्तरपदस्थस्य किम्। परमयशःकारः।

**अधःशिरसी पदे। ८। ३। ४७।**

तयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे। अधस्पदम्। शिरस्पदम्। समास इत्येव। अधः पदम्। शिरः पदम्। अनुत्तरपदस्थस्येत्येव। परमशिरः पदम्। कस्कादिषु (१८४०) भास्करः (१६)। इति विसर्गसन्धिः।

---

(१५) अतइति तपरकरणेन तद्भाविपरत्वम् तेन तथाभूतनिष्पन्नकहनशब्दभावस्य परत्वम् समासे नत्वेव घटकावयवत्वमथवा अतइति तपरकरणं किं भाः कर इत्यादौ मा भूत्।

(१६) तपरकरणे भास्करस्य कथं च इत्याशङ्क्य कस्कादित्वात्सत्वमित्याह भास्कर इति।

स्वौजसमौडिति (८६पृ०) सुप्रत्यये शिवस् अर्च्य इति स्थिते ।

**ससजुषो रुः । ८ । २ । ६६ ।**

पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यात् (४६पृ०) । जश्त्वापवादः ।

**अतो रोरप्लुतादप्लुते । ६ । १ । ११३ ।**

अप्लुतादतः परस्य रोरुत् स्यादप्लुतेऽति । भोभगो अघो इति (७८पृ०) प्राप्तस्य यत्वस्यापवादः । उत्वं प्रति रुत्वस्यासिद्धत्वन्तु न भवति रुत्वमनूद्य उत्वविधेः सामर्थ्यात् ।

**प्रथमयोः पूर्वसवर्णः । ६ । १ । १०२ ।**

अकः (१) प्रथमद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ।

**नादिचि । ६ । १ । १०४ ।**

अवर्णादिचि परे न पूर्वसवर्णदीर्घः । आद्गुणः (४२पृ०)(२) । एङः पदान्तादति (५०पृ०) । शिवोऽर्च्यः । अत इति तपरः किम् । देवा

---

(१) प्रथमयोरिति प्रथमाशब्दः प्रथमाद्वितीयासमुदाये गौणः द्विवचनं तु समुदायापेक्षया । इकोयणचीति सूत्रात् (२२पृ०) अचीति अकः सवर्णे दीर्घ इत्यतः (४८पृ०) अक इति, दीर्घ इति च, एकः पूर्वपरयोरिति (४२पृ०) सूत्रद्वयानुवर्त्य योजनयाऽऽह अक इत्यादि । अचीति किं हरिः कविः । अक इति किम् गावौ नावौ । हरी इत्यादावपि इकौरि-त्वादपि पूर्वसवर्णदीर्घवारणाय प्रथमयोरित्युक्तम् ।

(२) अपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिरिति न्यायात् नादिचीति दीर्घरू-पापवादे निषिद्धे उत्सर्गस्य आद्गुणस्य प्रवृत्तिरित्याह आद्गुण इति.

अत्र । अतीति तपरः किम् । ख आगन्ता । अप्लुतात्किम् । एहि सुस्रोत३ः (३) अत्र स्नाहि । प्लुतस्यासिद्धत्वादतः परोऽयम् । अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम् । तपरकरणस्य तु न सामर्थ्यं दीर्घनिवृत्त्या चरितार्थत्वात् । अप्लुते किम् । तिष्ठतु पय अ३ ग्निदत्त । गुरोरनृत इति (५४पृ०) प्लुतः ।

## हशि च । ६ । १ । ११४ ।

अप्लुतादतः परस्य रोरुत् स्याद्धशि । शिवो वन्द्यः । रोरि (७८पृ०) त्युकारानुबन्धग्रहणान्नेह प्रातरत्र । धातर्गच्छ । देवास् इह इति स्थिते । रुत्वम् ।

## भोभगो अघो अपूर्वस्य योऽशि ।८।३।१७।

एतत्पूर्वस्य रोर्यादेशः स्यादशि परे । असन्धिः सौत्रः (४) । लोपः शाकल्यस्य(४१पृ० । देवा इह । देवायिह । अशि किम् । देवाः सन्ति । यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात् । न ह्ययमल्विधिः (३२पृ०) (५)रोरितिसमुदायरूपाश्रयणात् । भोस् भगोस् अघोस् इति सकारान्ता निपाताः । तेषां रोर्यत्वे कृते

---

(३) सुस्रोतःशब्दः कश्चित् संज्ञा तस्यामन्त्रणे दूराद्धूते चेति (५४पृ०) प्लुतः ।

(४) स्थाने कृतः सौत्रः एतच्च भगोऽघोशब्दयोरोकारान्ततामतेन वर्ति तु सान्तत्वमते असन्धिरेव न्याय्य इति बोध्यम् ।

(५) रोरुकारस्यानुबन्धतया रेफमात्रविधानेन, तदेव विसर्गस्थानि, तथा चानल्विधिरिति निषेधाद स्थानिवद्भावाभावदाशङ्क्य गत्वमिति

## व्योर्लघुप्रयत्नतरः शाकटायनस्य।८।३।१८।

पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे। यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं स लघूच्चारणः।

## ओतो गार्ग्यस्य।८।३।२०।

ओकारात्परस्य पदान्तस्य लघुप्रयत्नस्य यकारस्य (६) नित्यं लोपः स्यात्। गार्ग्यग्रहणं पूजार्थम्। भो अच्युत। अलघुप्रयत्नपक्षे भोयच्युत। पदान्तस्य किम् तोयम्।

## उञि च पदे।८।३।२१।

अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोप उञि परे। स उ एकाग्निः। पदे किम्। तन्वयुतम् (७)। वेञः संप्रसारणे रूपम्। यदि तु प्रतिपदोक्तो निपात उञिति गृह्यते। तर्हि उत्तरार्थं (८) पदग्रहणम्।

## हलि सर्वेषाम्।८।३।२२।

---

तथाच अपक्षीदित्यत्र षढोऽसिद्धि ढोपस्य स्थानिवद्भावेन ढढ ईढीति यथा प्रवर्त्तते एवमिहापि विसर्गस्य रुत्वेन यत्वं प्रवर्त्तते इति भावः।

(६) ओत इति सूत्रे व्योर्लघुप्रयत्नतर इत्यतः व्योरित्यस्यानुवृत्तिसम्भवेऽपि ओतःपरस्य वकारस्यासम्भवात् यकारमात्रस्यानुवृत्तिर्व्याख्यानादित्यभिप्रायेणाह यकारस्येति।

(७) तस्मै उतमिति च्छेदः वेञः संप्रसारणादुतमिति सिद्धं भूतपूर्व-अकारमादाय उञयमिति बोध्यम्।

(८) उत्तरार्थमिति व्यवहितेऽपि उञो हलादित्यत्र(६५ पृ०)प्रवृत्त्यर्थं तत्।

भोभगोअघोअपूर्वस्य लघूच्चारणस्य यकारस्य लोपः स्याद्धलि सर्वेषां मतेन। भो देवाः। भो लक्ष्मि। भो विद्वद्वृन्द। भगो नमस्ते। अघो याहि। देवा नम्याः। देवा यान्ति। हलि किम्। देवायिह।

**रोऽसुपि (९)।८।२।६९।**

अह्नो रेफादेशः स्यान्न तु सुपि। रोरपवादः। अहरहः। अहर्गणः। असुपि किम्। अहोभ्याम्। अत्राहन्निति (१८३५०) रुत्वम्। *रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्*। अहो रूपम्। गतमहो रात्रिरेषा। एकदेशविकृतस्यानन्यत्वात् अहोरात्रः। अहो रथन्तरम्। *अहरादीनाम्पत्यादिषु वा रेफः*। विसर्गापवादः (१०)। अहर्पतिः। गीर्पतिः। धूर्पतिः। पक्षे विसर्गोपाध्मानीयौ।

**रो रि।८।३।१४।**

रेफस्य रेफे परे लोपः स्यात्।

**ढ्रलोपे पूर्वस्य दीर्घोऽणः।६।३।१११।**

ढरेफौ लोपयतीति ११)तथा तस्मिन्वर्णे अर्थाड्ढकाररेफात्मके

---

(९) रोऽसुपीति यदि पर्युदासस्तदा सुब्भिन्नस्य तत्सदृशस्य प्रत्ययस्यैव स्यात् नत्वहर्पतिरित्यादौ तस्मात् नञः प्रसज्यप्रतिषेधपरतेत्याह न तु सुपीति।

(१०) विसर्गापवाद इति रेफस्यानुवाद्यतया तस्यैव तद्व्यवधानं विसर्गनिवर्त्यमिति द्रष्टव्यम्।

(११) ढ्रलोप इति तत्पुरुषे षष्ठ्यादेशाद्यभ्यासे रलोपे पूर्वस्यो दीर्घ-

परे पूर्वस्याऽणो दीर्घः स्यात्। पुनारमते। हरीरम्यः। शम्भूराजते। अण*: किम्। तृढः वृढः। तृह हिंसायाम्। वृह उद्यमने। पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्यैव दीर्घार्थम्। अजर्घाः (१२)। लीढः। मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे (७८पृ०) रो रीति (८०पृ०) लोपे च प्राप्ते।

**विप्रतिषेधे (१३) परं कार्यम्। १।४।२।**

तुल्यबलविरोधे परं कार्यं स्यात्। इति लोपे प्राप्ते पूर्वत्रासिद्धमिति (१२पृ०) रोरीत्यस्य सिद्धत्वादुत्वमेव। मनोरथः।

---

पत्तिर्बहुव्रीहौ व्यधिकरणत्वादसाधुत्वापत्तिरतोऽव्यादृष्टे ढरेफौ लोपयतीति। कर्मण्यणि उपपदसमासः। दूरलकार उच्चारणार्थः॥

अत्राण्* पूर्वेण णकारेण व्याख्यानात्।

(१२) अजर्घा इति गृधेर्यङ्लुकि लङः सिपि शब्लुकि द्वित्वे सिप ईडभावपक्षे लघूपधगुणे अटि इतश्चेतीकारलोपे (३।५पृ०) हल्ङ्यादिलोपे (१११पृ०) च भष्भावः जश्त्वम्। दश्चेति (३०।२१पृ०) दकारस्थाने रुत्वपक्षे रो रीति (८०पृ०) रकारलोपेऽनेन सूत्रेण दीर्घः।

(१३) विप्रतिपूर्वात् कर्मव्यतिहारे वर्त्तमानात् सेधो घञि परस्परविरोधार्थको विप्रतिषेधः। तत्र नित्यस्यावश्यकत्वात् अन्तरङ्गस्य ज्ञापकादिना प्राबल्यात्, अपवादस्य वचनप्रामाण्यात्, तेषामेव परशास्त्रं प्रति बाधकतया तद्भिन्न एवास्य विषय इति ध्वनयन्नाह तुल्यबलेति "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय" (२०पृ०) इत्युक्तेर्नित्यादीनामेव बलवत्त्वात् तद्विषयेऽस्य प्रवृत्तिरिति भावः। अत्रेदं बोध्यम्। परस्मिन् कार्ये कृते यदि पूर्वस्यापि निमित्तमस्ति तदा क्वचित् तदपि भवति क्वचिन्न भवतीत्यत्र लक्ष्यानुरोधात् व्यवस्था। तत्र भिन्न—

**एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।६।१।१३२।**

अककारयोरेतत्तदोर्यः (१४)सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे। एष विष्णुः। स शम्भुः। अकोः (१५) किम्। एषको रुद्रः। अनञ्समासे किम् असशिवः। हलि किम्। एषोऽत्र।

**सोऽचि लोपे चेत्पादपूरणम्। ६। १ ।१३४।**

स इत्यस्य (१६) सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत।

---

कीत्यत्र परत्वात् षिभावे कृतेऽपि पश्चादकच्। तदुक्तमभियुक्तैः पुनःप्रसङ्गविज्ञानात् सिद्धमिति। त्वं जुहुतादित्यत्र तु परत्वात् पूर्वं तातङि कृतेऽपि स्थानिवद्भावेन पश्चात् हुझल्भ्य (उ१०९पृ०) इति धित्वं न 'सकृद्गतौ विप्रतिषेधेन यद्बाधितं तद्बाधितमेवे'ति न्यायात्।

(१४) एतत्तदोरर्थगतसंख्याभिधायी यः सुरित्यर्थः तेन परमसइत्याद्युत्तरपदेऽपि तद्गतसंख्याभिधायित्वात् हलि परे सुलोपः। अन्यथा पञ्चम्यन्तताकरणे परमतदिति समुदायस्य प्रातिपदिकतया तत्प्रकृतित्वाभावान्न सुलोपप्रसङ्गः। एतज्ज्ञापकञ्च अनञ्समास इति सूत्रएव नञ्समासपर्युदासकरणम्।

(१५) अकोः किं साकच्कयोः मध्यान्तरत्वादप्रसङ्ग इति प्रश्नः। अकोरिति निषेध एव तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति परिभाषां ज्ञापयति तेन एतत्तदोर्ग्रहणेनैव साकच्कयोर्ग्रहणात् सुलोपप्रसङ्गे अकोरिति निषेध इति बोध्यम्।

(१६) स इति तच्छब्दस्य प्रथमैकवचनान्तस्यानुकरणमित्याह स इत्यस्येति।

सेमामविड्ढि प्रभृतिम्। इह ऋक्पाद एव गृह्यत इति वामनः। अविशेषाच्छ्लोकपादोऽपीत्यपरे। सैष दाशरथी-रामः। लोपे चेदिति किम्। स ईक्षते। स एवमुक्त्वा। सत्येवेत्यवधारणन्तु स्यश्छन्दसि बहुलमिति पूर्वसूत्राद्बहुल-ग्रहणानुवृत्त्या लभ्यते। तेनेह न। सोऽहमाजन्मशुद्धानाम् (उ॰५।११२॰)। माजन्म-शुद्धानाम्।

इति स्वादिसन्धिः।

---

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १ । २ । ४५ ।**

धातुं प्रत्ययं प्रत्ययान्तञ्च वर्जयित्वार्थवच्छब्दरूपं (१) प्रातिपदिकसंज्ञं स्यात् ।

**कृत्तद्धितसमासाश्च । १ । २ । ४६ ।**

कृत्तद्धितान्तौ समासश्च प्रातिपदिकसंज्ञाः स्युः । पूर्वसूत्रेण सिद्धे (२) समासग्रहणन्नियमार्थम् । यत्र सङ्घाते पूर्वो

---

(१) स्वादिविधौ प्रातिपदिकाधिकारात्तत्संज्ञामेव प्रथममाह अर्थवदिति अर्थवदित्यनुगुणं विशेष्यमध्याहरति शब्दरूपमिति अधातुरप्रत्यय इति पुंलिङ्गनिर्देशस्तु परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्युक्तेः (२९०पृ०) । एतत्सूत्रे परसूत्रे चार्थवत्त्वमेतत्संज्ञाफलीभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधजनकत्वम् अन्यथा धातुरिति पर्युदासेन व्याख्यानाद्धाऽर्थवत्त्वे सद्दृशग्रहणेन सिद्धे उत्तरसूत्रे कृदादीनामनर्थकानामसिद्धे स्वार्थवत्त्वग्रहणं व्यर्थं स्यात् । अहन्निति धातौ, अकार्षुरित्यादिप्रत्ययान्ते च एतत्साध्यविभक्त्यनपेक्षत्वेऽपि तदितरानपेक्षत्वमस्त्येवेति अधातुरप्रत्यय इति तत्पर्युदासः एकदेशवर्णेऽर्थबोधजनकत्वाभावान्नातिप्रसङ्गः । अत्र प्रत्ययपदं प्रत्ययप्रत्ययान्तपरं तन्त्रावृत्त्यैवोभयग्रहणादित्याह प्रत्ययं प्रत्ययान्तञ्चेति । अत एव भाष्ये 'न लोके केवलेन प्रत्ययेनार्थोऽवगम्यते केन तर्हि सप्रकृतिकेने'त्युक्तम् । हरिणाप्युक्तम् । 'धात्वादीनां विशुद्धानां लौकिकार्थो न विद्यते । कृत्तद्धितानामर्थश्च केवलानामलौकिकः । प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते' इति । भू सत्तायामित्यादौ कर्मण्यणित्यादौ चार्थकथनन्तु अलौकिकार्थकथनमात्रं प्रक्रियादशायामिति वेदितव्यम् ।

(२) आवृत्यार्थो यथा नास्ति कश्चिद्गुणाद्युपकम्भले । देवदत्तादयो वाक्ये

भागः पदं (३) तस्य चेद्भवति तर्हि समासस्यैवेति । तेन वाक्यस्य न ।

प्रत्ययः । ३ । १ । १ ।

आपञ्चमपरिसमाप्तेरधिकारो (४) ऽयम् ।

परश्च (५) । ३ । १ । २ ।

अयमपि तथा ।

ङ्याप्प्रातिपदिकात् । ४ । १ । १ ।

---

तथैव सुर्निरर्थका इत्युक्तेरखण्डवाक्यस्यापि बोधकत्वात्तस्यापि प्रातिपदिकत्वापत्त्या तदुत्तरं स्वादिप्रसङ्ग इति तन्निवारणायेदं नियमसूत्रमित्याह पूर्वसूत्रेणेति । 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणं'मिति न्यायादेव प्रत्ययान्तत्वलाभात् कृत्तद्धितादीनामपि प्रत्ययत्वात् पूर्वसूत्रेण संज्ञासिद्धेरिति भावः ।

(३) पदमिति स्वातन्त्र्येण प्रयोगार्हमर्थवदित्यर्थः । अनुकरणस्यानितिपरस्य प्रयोगासत्त्वेऽपि इतिपरस्य पृथक्प्रयोगार्हत्वात् गविल्यय-माहेत्यादौ न प्रसङ्गः अनुकरणस्य शब्दमात्रपरत्वात् ।

(४) अधिकार इति संज्ञाधिकार इत्यर्थः संज्ञात्वावगमस्तु व्याख्यानात् विकरणागमादीनां तु न संज्ञा, प्रत्यय इति महासंज्ञया स्वस्वप्रकृत्यन्विताथप्रत्यायकस्यैव संज्ञात्वात् प्रकृत्यर्थत्वञ्च धातुपाठकोषादौ तत्तदर्थ्य बोधितत्वम् । अतएव गच्छधाद्यादेशानां न संज्ञा तेषां स्थान्यर्थेनैवार्थवत्त्वात् न तु स्वार्थोऽस्ति अतएव कोषादौ तदर्थाकथनम् । तदर्थमेव भाष्ये स्वीयमर्थं प्रत्याययतीति प्रत्ययशब्दविग्रहे स्वीयपदोपादानम् ।

(५) परश्चेति द्वियोगलक्षणे पञ्चम्याः परः पूर्वो वेत्यनियमेनाध्याहारे प्रसक्ते पर एवेतिनियमार्थमिदं सूत्रम् तथा प्रकृत्यर्थमात्रविशेषणस्य

ङ्यन्तादाबन्तात् प्रातिपदिकाच्चेत्यापञ्चमपरिसमाप्तेरधिकारः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्येव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात्। ङ्याब्भ्यामाम्मा भूदित्येवमर्थम्।

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्। ४। १। २।**

ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः। सुङसोरुकारेकारौ जश्टङपाश्चेतः।

**विभक्तिश्च। १। ४। १०४।**

सुप्तिङौ विभक्तिसंज्ञौ स्तः। तत्र सुऔजसित्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः।

**सुपः। १। ४। १०३।**

सुपस्त्रीणि (६) त्रीणि वचनानि एकैकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः।

---

केवलप्रकृतेः पचपठेत्यादेः प्रयोगो मा भूदिति प्रत्ययः परो भवत्येवेति नियमार्थं च। तेन केवला प्रकृतिः प्रत्ययो वा न प्रयोक्तव्य इति सिद्धम्।

(६) तिस्रस्त्रीणि त्रीणीत्यर्थः त्रीणि त्रीणीतिपदं तान्येकवचनद्विवचनबहुवचनान्येकश इति सूत्रस्थ तानीतिपदं [illegible] त्रीणीत्यादि। सुप इति सुप् प्रत्याहारात् षष्ठी एकश एकैकमित्यर्थः।

**द्व्येकयोर्द्विवचनैकवचने । १ । ४ । २२ ।**

द्वित्वैकत्वयो (७) रेतौ स्तः ।

**बहुषु (८) बहुवचनम् । १ । ४ । २१ ।**

बहुत्वे एतत्स्यात् ।　रुत्वविसर्गौ ।　रामः ।

**सरूपाणामेकशेष एकविभक्तौ । १ । २ । ६४ ।**

एकविभक्तौ यानि सरूपाण्येव(९)दृष्टानि तेषामेक एव (१०)

---

(७) द्व्येकयोरिति । द्व्येकशब्दौ संख्यापरौ न तु संख्येयपराविति आह द्वित्वै- कत्वयोरिति लौकिकप्रयोगे त्वाद्यतः संख्याः संख्येय इति भाष्योक्तेः संख्येयपरत्व एव साधुत्वम् । क्वचिदेकत्वाबोधनेऽपि उत्सर्गत एकवचनं प्रयोक्तव्यं तेन पचतिकल्पमित्यादौ अव्ययेभ्यश्च ध्यैकवचनप्रयोगसिद्धि- रिति सम्बितेति सूत्रभाष्ये स्पष्टमभिहितम् । शब्देन्दु० ।

(८) बहुष्विति । त्रित्वादिपरार्द्धान्तसंख्याव्यापकधर्मविशेषो बहुत्वं तत्परो बहुशब्दो बहुवचनं तु आश्रयगतं बहुत्वं धर्मं आरोप्य कृतम् दारा इत्यादौ च वाचकशब्दस्यैव बहुत्वं वाच्ये आरोप्यते स चारोपः शब्दकोषव्यवहारानुसारादेवेति नातिप्रसङ्गः । भर्तृदारयोरन्वेज- योरित्यादि समासे तु नारोपो मानाभावात् द्व्येकयोरितिनिर्द्दे- शाच्च । एतेनैकस्मिन्नपि गुरवः समागता इत्यादि समर्थितम् । शब्देन्दु० ।

(९) सरूपाण्येवेति सर्वोपूना तत्तच्चव्रेव विधेय इत्यतः (४४४पृ०) एव- कारोऽपकृष्यत इत्याह सरूपाण्येवेति एवेतिकरणात् अमनीपरिच्छे- पृषाचिनोर्भावमस्वोर्वैकव्येनः आत्मृभ्यवाहावैकस्येऽपि बोलवाहो विरूपत्वात् ।

(१०) एकशेषवाक्यमनैमित्तिकोऽतोऽन्तरङ्गत्वात् प्रगुणत्तः पूर्वमेवेति तद्विषये न द्वन्द्वप्राप्तिरिति बोध्यम् । एकशेषशब्दार्थश्च इतरनिवृत्तिपूर्व-

शिष्यते। प्रथमयोः पूर्वसवर्णः (७७पृ०)। नादिचि (७७पृ०) वृद्धिरेचि (४३पृ०)। रामौ।

चुटू। १। ३। ७।

प्रत्ययाद्यौ (११) चुटू इतौ स्तः। इति जस्य इत्संज्ञा

न विभक्तौ (१२) तुस्माः। १। ३। ४।

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। इति सकारस्य नेत्त्वम्।

अतो गुणे। ६। १। ९७।

---

कमेकमात्रावस्थानं तदाह एक एवेति। शिष्यते इति शेषोऽवस्थानं तस्य सिद्धतया अन्यनिवृत्तिरेव विधेया तत्र शिष्यमाणं लुप्यमानार्थाभिधायीतिन्यायेन श्रूयमाणपदादन्यस्यैव बोधः। धातुषु तु नास्य प्रवृत्तिरेकनिष्ठानेकव्यापाराणामिवानेकनिष्ठानामपि तेषामेकधातुतो बोधने बाधकाभावात् एकादिदशान्तसंख्यावाचिनामेकशेषप्रवृत्तौ न भवतोऽनभिधानात् विंशत्यादौ त्विष्ट एवैकशेष इति। शब्देन्दु०।

(११) आदिर्ञिटुडव इत्यत्र आदिरिति (७४२पृ०) षः प्रत्ययस्येत्यतः (२१८पृ०) प्रत्ययस्येत्यनुवर्त्य योजयन्नाह प्रत्ययाद्याविति। तेन चाचाटे इत्यत्र आटचः नेत्त्वम्। टस्य प्रत्ययाद्याविति किं चागमादौ मा भूत्।

(१२) न विभक्ताविति हलन्त्यमित्यस्य (४पृ०) निषेधोऽयम्। अनित्यमिदं तेन किमोऽद्विति अतश्चकारेत्स्यात् क्वेति सिद्धम्। एतच्च प्राग्दिशीयत्वेन विभक्तिसंज्ञस्यापि इदमस्थमोर्मकाररश्चापीत्युदित्करणात् ज्ञाप्यते इति विवेच्यम्। तत्र रामात् पचेरन्नित्यादौ तोः, रामम् पचमहीत्यादौ मस्य नेत्त्वम्।

अपदान्ताद (१३) कारादगुणे परतः पररूपमेकादेशः स्यात्। इति प्राप्ते परत्वात्पूर्वसवर्णदीर्घः। अतो गुणे इति हि पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति (१४) न्यायेनाकः सवर्णे दीर्घ (४८पृ०) इत्यस्यैवापवादो नतु प्रथमयोरित्यस्यापि (७७पृ०)। रामाः।

एकवचनं सम्बुद्धिः।२।३।४६।

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्।

एङ् (१५) ह्रस्वात्सम्बुद्धेः।६।१।६६।

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत्। सम्बुद्ध्याक्षिप्तस्याङ्गस्य (१६) एङ्ह्रस्वाभ्यां विशेषणान्नेह। हे कतरत् (१७) कुलेति। हे राम। हे रामौ। हे रामाः। एङ्ग्रहणं

---

(१३) उस्यपदान्तादित्यतः (उ०१७पृ०) अपदान्तादिति एङि पररूपमित्यतः (४७पृ०) पररूपमित्यनुवर्त्यापदान्तादित्यादि।

(१४) नोत्तरानिति अनन्तरापेक्षया उत्तरान् व्यवहितानित्यर्थः व्याख्या तत्रैतत् प्राक् (४४पृ०)।

(१५) एङित्यादि। हल्ङ्याब्भ्य इत्यतः (१११पृ०) हलिति लोपो व्योरित्यतो (४२१पृ०) लोप इति चानुवर्त्य विभक्तिविपरिणामेनान्वयः कार्यः।

(१६) सम्बुद्ध्याक्षिप्तस्येति सम्बुद्धेः प्रत्ययत्वेन 'यस्मात् स विहितस्तदादि'रिति परिभाषोपस्थापितस्येत्यर्थः। भाष्ये प्रत्यये ग्रहणार्थे यस्मात् स विहित इत्याद्युपतिष्ठते इति परिभाषार्थो दर्शितः।

(१७) कतरदिति अत्र न हल्लोपः अद्ड्डतरादिभ्य इति परे लोपेनापहारात् सम्पत्त्यभावादिति भावः।

किम्। हे हरे। हे विष्णो। अत्र हि परत्वान्नित्यत्वाच्च सम्बुद्धिगुणे कृते ङस्यात्परत्वं (१८) नास्ति।

**अमि पूर्वः। ६। १। १०७।**

अकोऽम्यचि (१९) परतः पूर्वरूपमेकादेशः स्यात्। रामम्। रामौ।

**लशक्वतद्धिते (२०)। १। ३। ८।**

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः। इति शसः शस्य-त्संज्ञा।

**तस्मा (२१) च्छसो नः पुंसि। ६। १। १०३।**

---

(१८) परत्वं नास्तीति। तथाच सूत्रे एङ्ग्रहणं कर्त्तव्यमिति भावः किञ्च वध्वीसहितवाचकशब्दसम्बोधने ह्रस्वोमार्थमेङ्ग्रहणमावश्यकम्। अतएव 'इमां किमाचामय से न चक्षुषी' इति नैषधीयप्रयोगे से इति पृथक् पदं सम्बोधनान्तं हे वध्वीसहिते दमयन्तीत्यर्थात् एतच्च निगरणचलनार्थेभ्यश्चेति सूत्रे मनोरमायामभिहितम्।

(१९) प्रथमयोरिति (७७पृ०) पूर्वसवर्णदीर्घे प्राप्ते तत्सरूपपूर्वरूपार्थोऽयमारम्भः। अतएवं पूर्वसवर्ण इत्यस्यैव सिद्धे पूर्वग्रहणं दीर्घरूपवारणाय। अकः सवर्णे (४९पृ०) इत्यतोऽक इति इको यणचीत्यतः (४२पृ०)अचीति पदद्वयानुवर्त्याकारोऽम्यचीत्यादि। अमोऽवयवेऽचीत्यर्थः तेन न मकारसहितस्य पूर्वरूपम्।

(२०) अतद्धिते किं प्राचित्यायत इति चप् (६८०पृ०)चूडालः। लोमादिभ्यः शः (६८१पृ०) लोमश इत्यादौ शादीनामित्त्वं न।

(२१) तस्मादिति तच्छब्देन परिहितः पूर्वसवर्णदीर्घ एव परामृश्यते न तु दीर्घमात्रं तेन गाः पश्येत्यादौ न णत्वम्।

पूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य नः स्यात् पुंसि।

## अट्कुप्वाङ्नुम्व्यवायेऽपि। ८। ४। २।

अट्, कवर्गः, पवर्गः, आङ्, नुम्, च एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्याम्परस्य(२२)नस्य णः स्यात्समानपदे। पदव्यवायेऽपीति(४८२पृ०)निषेधम्बाधितुम् आङ्ग्रहणम्। नुम्ग्रहणमनुस्वारोपलक्षणार्थम्। तच्चाकर्त्तुं शक्यम् अयोग(२२)वाहानामट्सूपदेशस्योक्तत्वात् (६७पृ०)। इति णत्वे प्राप्ते।

## पदान्तस्य। ८। ४। ३७।

पदान्तस्य नस्य णत्वन्न(२४) स्यात्। रामान्।

## यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्। १। ४। १३।

यः प्रत्ययो यस्मात् क्रियते तदादि शब्दरूपन्तस्मिन् प्रत्यये प-ऽङ्गसंज्ञं स्यात्। भवामि भविष्यामीत्यादौ विकरणविशिष्टस्याऽङ्गसंज्ञार्थन्तदादिग्रहणम्। विधिरिति कि-

---

(२२) रषाभ्यां नो ण इति (१०६ पृ०) समानपदग्रहणादिह रषाभ्यामिति बाधितुमिति तेन पर्याणद्धमित्यादावुपसर्गरेफोपपदस्थादपि णत्वम्

(२३) अयोगेति ते चानुस्वारविसर्गजिह्वामूलीयोपध्मानीयाः अट्स्विति यकारोपरीत्युक्तं प्राक् तेन बृंहणं बृंहणमित्यादौ णत्वम्।

(२४) न भापूकमिगमीत्यादितः (७०२००पृ०) नेत्यनुवर्त्तते णत्वं नेति।

स्त्री इयती । (२५) प्रत्यये किम् । प्रत्ययविशिष्टस्य(२६) ततोऽप्यधिकस्य वा मा भूत् ।

**अङ्गस्य । ६ । ४ । १ ।**

इत्यधिकृत्य ।

**टाङसि (२७) ङसामिनात् स्याः । ७ । १ । १२ ।**

अकारान्तादङ्गाट्टादीनामिनादय आदेशाः स्युः । णत्वम् । रामेण ।

**सुपि च । (२८) । ७ । ३ । १०२ ।**

यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात् । रामाभ्याम् ।

---

(२५) इयतीति इदंशब्दात् वतुपि किमिदम्भ्यां वो घ इति (६६८पृ०) घादेशे आयनेयीनीयियः फढखछघां प्रत्ययादीनामिति (२१८पृ०) घस्येयादेशे इदं किमोरीश्की (४७२पृ०) इतीशि यस्येति चेति (१२८पृ०) ईकारलोपे ङीपीयतीति सिद्धम् तत्र ईयावयवेकारपरतः स्त्रीशब्दस्येयङाद्यापत्तिः विधिपक्षे तु नैव दोष इयप्रत्ययस्य स्त्रीशब्दादविधानादिति भावः ।

(२६) प्रत्ययविशिष्टस्याङ्गसंज्ञायां यज्ञेत्यादिसिद्धिः ज्वरत्वरेत्यादेशस्य (७०२५पृ०) परनिमित्तत्वाभावेन अचः परस्मिन्निति (२४पृ०) स्थानिवत्त्वाप्रवृत्त्या न सम्प्रसारणे सम्प्रसारणमिति (१६१पृ०) निषेधाभावात् अभ्यासस्य पुनरपि सम्प्रसारणं स्यात् । अधिकस्य तथात्वे देवदत्त ओदनमपचदित्यादौ देवदत्तशब्दोत्तरं सुपं निमित्तीकृत्य लङ्पर्यन्तस्याङ्गत्वात् तस्य लङ्परत्वेन देवेत्यस्यात् पूर्वमडापत्तिः अङ्गसंज्ञायां प्रत्ययनिमित्तत्वाभावेन लङादिनिष्[illegible]स्यैतस्य दुर्लभत्वादिति भावः ।

(२७) टाङसीति । अतो भिस ऐस इत्यतः (९२पृ०) अत इत्यनुवर्तते ।

(२८) सुपि चेति अतो दीर्घो यञीत्यनुवर्तते (७०८पृ०) यञीति चाल्त्वात्तदादिविधिरित्याह यञादाविति ।

**अतो भिस ऐस्। ७। १। ९।**

अकारान्तादङ्गाद्भिस ऐस् स्यात्। (२८पृ०) अनेकाल्त्वा-त्सर्वादेशः। रामैः।

**ङेर्यः। ७। १। १३।**

अतोऽङ्गात्परस्य ङे इत्यस्य यादेशः स्यात्। रामाय। इह स्थानिवद्भावेन यादेशस्य सुप्त्वात्सुपि चेति दीर्घः। सन्निपा-तलक्षणोविधिरनिमित्तं तद्विघातस्येति(२९) परिभाषा तु नेह प्रवर्त्तते कष्टाय क्रमणे (उ०२२८पृ०) इतिनिर्देशेन तस्या नित्यत्वज्ञापनात्। रामाभ्याम्।

**बहुवचने झल्येत्। ७। ३। १०३।**

झलादौ बहुवचने सुपि परे अतोऽङ्गस्य एकारः स्यात्। रामेभ्यः। बहुवचने किम्। रामः रामस्य। झलि किम्। रामाणाम्। सुपि किम्। पचध्वम्। जग्न्वम्।

**वाऽवसाने। ८। ४। ५६।**

अवसाने झलां चरो (३०) वा स्युः। रामात्—रामाद्। द्वित्वे रूपचतुष्टयम्। रामाभ्याम्। रामेभ्यः। रामस्य।

---

(२९) सन्निपातः संश्लेषः लक्षणं निमित्तं यस्य तादृशो यो विधिः स तं सन्निपातं विहन्तीति तद्विघातस्यानिमित्तमुपजीव्यबाधायोगा-दित्यर्थः।

३०) झलां जशोऽन्ते (१६पृ०) झलामिति अभ्यासे चर् चेत्यतश्चरिति (उ०११पृ०) चानुवर्त्तते झलां चरो वा स्युरिति।

तस्य हिलपत्वे खरि चेति(६२पृ०)चर्लेऽप्यान्तरतम्यात्स एव न तु तकारः अल्पप्राणतया प्रयत्नभेदात् । अतएव सः सौति (उ०७६पृ०) तादेश आरभ्यते ।

**ओसि च । ७ । ३ । १०४ ।**

ओसि परे अतोऽङ्गस्य एकारः स्यात् । रामयोः ।

**ह्रस्वनद्यापो नुट् । ७ । १ । ५४ ।**

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्याऽऽमो (१२) नुडागमः स्यात् ।

**नामि । ६ । ४ । ३ ।**

नामि परेऽजन्ताङ्गस्य दीर्घः (३२) स्यात् । रामाणाम् । सुपि चेति(८२पृ०) दीर्घो यद्यपि परस्तथापीह न प्रवर्त्तते सन्निपातपरिभाषाविरोधात् । नामीत्यनेन त्वारम्भसामर्थ्यात् परिभाषा बाध्यते । रामे । रामयोः । सुपि एत्वे कृते ।

**अपदान्तस्य मूर्द्धन्यः (३३) । ८ । ३ । ५५ ।**

---

(३१) आमि सर्वनाम्नः सुडिति (८७पृ०) आमीत्यनुवर्त्त्य विभक्तिं विपरिणमय्याह आम इति ।

(३२) द्रूलोपे पूर्वस्य दीर्घोऽणः इत्यतो (८०पृ०) दीर्घ इत्यनुवर्त्त्य अचश्चेति (२५पृ०) परिभाषया अजन्तलोपस्थितेराह अजन्ताङ्गस्येत्यादि अङ्गस्येति किं चर्मणाम्, वर्मणामित्यादौ मा भूत् ।

(३३) अत्र अपदान्तस्य च इत्यनेनैव सिद्धे मूर्द्धन्यग्रहणम् इणः षीध्वमित्यत्र (उ०२६पृ०) षकारस्थाने ढत्वपक्षे मूर्द्धन्यविधानार्थम् ।

आपादपरिसमाप्तेरधिकारोऽयम् ।

**इण्कोः । ८ । ३ । ५७ ।**

इत्यधिकृत्य ।

**आदेशप्रत्यययोः । ८ । ३ । ५९ ।**

सहेः साडः सः इति (१४९पृ०) सूत्रात्स इति षष्ठ्यन्तमपदमनुवर्त्तते । इण् कवर्गाभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य(२४) च यः सकारस्तस्य मूर्द्धन्य आदेशः स्यात् । विवृताघोषस्य (२५) सस्य तादृश एव षः । रामेषु । इण्कोः किम् रामस्य । आदेशप्रत्यययोः किं सुपीः । सुपिसौ । सुपिसः । अपदान्तस्य किम् । हरिस्तत्र । एवं कृष्णमुकुन्दादयः ।

**सर्व्वादीनि (२६) सर्वनामानि । १ । १ ।२७।**

---

(२४) प्रत्ययशब्द एव तदवयवपरो व्याख्यानात् सातेः ( ७१० पृ० ) प्रत्ययनिषेधज्ञापकाच्चेत्याह प्रत्ययावयवस्येति । यदि षोभयावयवो गृह्यते तदा तिष्ठत्यामित्यादेशावयवे प्रसङ्गः । यदि प्रत्ययरूपः सकार इत्युच्यते तदा रामेष्वित्यत्र न स्यादतः एकापि षष्ठी विषयभेदाद्भिद्यते इति भावः ।

(२५) विवृताघोषस्येति विवृतत्वमाभ्यन्तरः प्रयत्नः अघोषो बाह्यस्तदुभयवत इत्यर्थस्तत्राद्यं ढकारवारणाय झकारवारणायाद्यम् ।

(२६) सर्वादीनीति । तद्गुणसंविज्ञानो बहुव्रीहिः इति सर्वनामानीति लिङ्गात् सर्व आदिरवयवो येषां तानीति विग्रहः तद्गुणावयवभेदः आरोपितावयवगतसंज्ञः समुदायः समासार्थः तस्य समुदायस्य युगपज्ज्ञाने प्रयोगाभावात् तदवयवेषु प्रवर्त्तमाना सर्वनामसंज्ञा अविशेषात् सर्वशब्देऽपि प्रवर्त्तते इति बोध्यम् । सर्वनाम्नामीत्यत्र पूर्वपदात् संज्ञायामिति (४१६पृ०) न णत्वं निपातनादिति भाष्ये स्थितम् ।

सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युः। तदन्तस्यापीयं संज्ञा द्वन्द्वे चेति (१०२पृ०)(३७) ज्ञापकात्। तेन परमसर्वत्रेति त्रल्, परमभवकानित्यत्राकच् (३८) सिध्यति।

### जसः शी (३९)। ७। १। १७।

अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः (२९पृ०)(४०)। न चाऽवर्णस्त्वित्यादाविव(१६१पृ०)नानुबन्धकृतमनेकाल्त्वमिति वाच्यम् सर्वादेशत्वात्प्राग् इत्संज्ञाया (४१) एवाभावात्। सर्वे।

### सर्वनाम्नः स्मै। ७। १। १४।

अतः सर्वनाम्नो ङे इत्यस्य स्मै स्यात्। सर्वस्मै।

---

(३७) द्वन्द्वे चेत्ययं निषेधः समुदायस्यैव न त्ववयवस्य द्वन्द्वे इति प्रथमार्थे सप्तमी द्वन्द्वः सर्वनामसंज्ञो न भवतीति सूत्रार्थः न हि तदन्तविधिं विना समुदाये संज्ञाप्रसक्तिरस्ति या निषिध्येतेति भावः।

(३८) अकजिति। कुत्सिते इति(७०६पृ०)सूत्रोक्तभाष्यरीत्या संख्याकारकाभ्यां पूर्णार्थस्येतरान्वयसम्भवेन सुबन्तादेव तद्धितोत्पत्तेर्नियमात् सर्वनामप्रकृतिकसुबन्तार्थगतकुत्साविवक्षायां सर्वनामावयवे प्रागकजिति सूत्रार्थात् तदन्तस्य संज्ञाभावे तदसिद्धिरिति भावः। शब्देन्दु०।

(३९) जसःशीति दीर्घोच्चारणमुत्तरार्थं तेन वारिणी इत्यादिसिद्धिः।

(४०) अनेकाल्त्वादिति न तु शित्त्वात्, प्रत्ययादित्वज्ञानादेव लशक्वतद्धिते इति (९०पृ०) शित्त्वसिद्धेः, प्राक् च तस्यासिद्धेः।

(४१) इत्संज्ञाया इति। तु इत्संज्ञोपदेशकाल एवेत्संज्ञा शीभावस्य तु सर्वादेशत्वानन्तरं स्थानिवत्त्वेन प्रत्ययत्वे सिद्धे लशक्वतद्धित इति प्रत्ययाद्यादेशस्यैव संज्ञेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः।

## ङसिङ्योः स्मात्स्मिनौ। ७।१।१५।

अतः सर्वनाम्नो ङसिङ्योरेतौ स्तः। सर्वस्मात्।

## आमि सर्वनाम्नः सुट्। ७।१।५२।

अवर्णान्तात् (४२) सर्वनाम्नो विहितस्यामः सुडागमः स्यात्। एत्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः। सर्वादयश्च पञ्चत्रिंशत्। सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्यायाम्। अन्तरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत् किम् इति। उभशब्दो द्वित्वविशिष्टस्य वाचकः। अतएव नित्यं द्विवचनान्तः। तस्येह (४३) पाठस्तु उभकावित्यकजर्थः न च कप्रत्ययेनेष्टसिद्धिः द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादाविवायच्प्रसङ्गात् (४४)। तदुक्तमुभयोऽन्यत्रेति अन्यत्रेति द्विवचनपरत्वाभावे।

---

(४२) अवर्णान्तादिति अवर्णान्तादङ्गात्परस्येत्यर्थः तेन येषां तेषामित्यादावामोऽवर्णान्तसर्वनामपरत्वाभावेऽपि नाप्रसङ्गः।

(४३) सर्वादिषूभयशब्दपाठो व्यर्थः सर्वनामकार्याणां शीप्रभृतीनां द्विवचनेऽसम्भवादित्याशङ्क्याह तस्येहेति।

(४४) अयच्प्रसङ्गादिति उभादुदात्तो नित्यमित्यत्रोभादुदात्त इति (११८८०) योगो विभज्यते अवयवतः संख्यावाचिन उभशब्दादयच्विषयेऽयच् स्यात्। उभयो मणिः। उभशब्दाद्वृत्तिविषये नित्यमयच् स्यात् स्वार्थे।

उभयशब्दस्य द्विवचनन्नास्तीति कैयटः। अस्तीति हरदत्तः। तस्मात् (४५)जस्ययजादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया प्रथमचरमेति(१०२पृ०)विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा भवति। उभये। उतरडतमौ प्रत्ययौ। यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणन्नास्ति सुप्तिङन्तमिति (२३पृ०) ज्ञापकात्। तथापीह तदन्तग्रहणं केवलयोः संज्ञायाः प्रयोजनाभावात्। अन्यतरा(४६) न्यतमशब्दावव्युत्पन्नौ स्वभावाद्द्विबहुविषये निर्द्धारणे वर्त्तेते। तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा। त्वत्वेतिद्दावप्यदन्तावन्यपर्यायौ। एक(४७)उदात्तोऽपरोऽनुदात्त इत्येके। एकस्तान्त इत्यपरे। नेम इत्यर्द्धे। समः सर्वपर्यायः। तुल्यपर्यायस्तु नेह गृह्यते यथासंख्यमनुदेशः समानामिति (६३पृ०) ज्ञापकात्। अन्तरं वहिर्योगेतिगणसूत्रेऽपुरीति (४८) वक्तव्यम्। अन्तरायाम्पुरि।

---

तेन उभयपक्षविनीतनिद्रा इत्यादौ यथा नित्योऽयच् एवं कप्रत्ययेऽपि स्यादिति भावः। अकचि कृते तु अयचो न प्रसङ्गः यत्र द्विवचनं न श्रूयते तत्रैवायजिति व्याख्यानात्। मनो०।

(४५) तस्मात् उभयशब्दात्। जसीति अवयवद्वयारब्धसमुदाये बहुत्वविवक्षायाम् जसः प्राप्तिरित्यर्थः।

(४६) उतरग्रहणेनैव सिद्धे गणेऽन्यतरशब्दपाठो व्यर्थोऽत आहान्यतरेति किं वक्तव्यम् एव (७११पृ०) उतरडतमयोर्विधानादन्यशब्दात्तदप्रसङ्ग इति भावः।

(४७) एक उदात्त इति एतं त्वमत्वे इत्यनुदात्तस्य, उत त्वः पश्यन्नित्यनुदात्तस्य च दर्शनादिति भावः एकः प्रथम इति। मनो०।

(४८) अपुरीति पूःशब्दस्य विशेष्यत्वे नेत्यर्थं अर्थवत् विवाक्षदाहरति अन्तरायामिति प्राकाराद्यावृतायामित्यर्थः।

र्त्तेत स च समासेऽपि स्यूयेत अतिक्रान्तो भवकन्तमतिभवकानिति वत्। भाष्यकारस्तु (५४) त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रम्प्रत्याचख्यौ। यथोत्तरं मुनीनां प्रामाण्यम् (५५)। *संज्ञोपसर्जनीभूतास्तु न सर्वादयः*(५६)। महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशात्। अतः संज्ञाकार्यमन्तर्गणकार्यञ्च(५७)तेषाञ्च भवति। सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय। अतिकतरं कुलम्। अतितत्।

## तृतीयासमासे (५८)। १। १। ३०।

अत्र सर्वनामता न स्यात्। मासपूर्वाय। तृतीयासमासार्थवाक्येऽपि न। मासेन पूर्वाय।

---

(५४) अज्ञाते कुत्सिते वाऽर्थे अव्ययसर्वनाम्नामकच् प्राक् टेरित्यकचि(७०पृ०) त्वकत्पितृक इति। तद्धितार्थे के तु त्वत्कपितृक इति तत्र न बहुव्रीहाविति निषेधात् त्वत्कपितृक इत्येव सूत्रकारमतं भाष्यकृता तु त्वकत्पितृक इत्यादिप्रयोगस्येष्टापत्त्या एतत्सूत्रं प्रत्याख्यातं इत्याह भाष्यकारस्त्विति।

(५५) श्रुतिद्वयप्रामाण्याद्विकल्पोऽस्त्विति आह यथोत्तरमिति तथाच भाष्यकारस्य सर्वतोत्तरत्वात्तदुक्तमयथस्यैव प्राप्नोतीति भावः।

(५६) उपसर्जनीभूतास्त्विति उपसर्जनत्वमितरविशेषणत्वेनार्थोपस्थापकत्वम्।

(५७) अन्तर्गणकार्यमिति अद्ड् डतरादिभ्यः इति(१४०पृ०) अदादीनाञ्च इत्यादि च(११५पृ०)कार्यम्। तत्रातिसर्वायेत्यादौ सामान्यसर्वनामकार्यं, अतिकतरत् अतितदित्यादौ विशेषतत्कार्यमद्डाकारादेशौ नेति विवेकः।

(५८) तृतीयासमासे इति अत्र पूर्वसदृशेति (२२८पृ०) सूत्रविहितः समासो

### द्वन्द्वे च । १ । १ । ३१ ।

द्वन्द्वे उक्ता संज्ञा न । वर्णाश्रमेतराणाम् । समुदायस्यायं निषेधो न त्ववयवानाम् । पूर्वपरावराणाम् । नचैवन्तदन्त-विधिना सुट्प्रसङ्गः । सर्वनाम्नो विहितस्यामः सुडिति व्याख्यातत्वात् (८७पृ०) ।

### विभाषा जसि । १ । १ । ३२ ।

जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्त्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात् । वर्णाश्रमेतरे वर्णाश्रमेतराः । शीभावमात्रेव विभाषेत्युक्तम् अतो नाकच् किन्तु कप्रत्यय एव । वर्णा-श्रमेतरकाः ।

### प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च । १ । १ । ३३ ।

एते जसः कार्य(५८) मात्युक्तसंज्ञा वा स्युः । प्रथमे प्रथमाः । इत्यादि । शेषं रामवत् । तयप्प्रत्ययस्ततस्तदन्ताः‡ ग्राह्याः । द्वितये द्वितयाः । नेमे नेमाः । शेषं सर्ववत् । * विभाषा-प्रकरणे तीयस्य ङित्सूपसंख्यानम्* । द्वितीयस्मै-

---

ग्टह्यते प्रतिपदोक्तत्वात् न तु कर्तृकरणयोः कृतीति तेन त्वयका कृत-मित्यादौ न निषेधस्तत्र त्वकत्कृतमित्येव प्रयोगः ।

(५८) प्रथमचरमेत्यादि अत्र सूत्रे नेति न सम्बध्यते प्रथमादिष्वसम्भवात् जसीत्यनुवृत्तेरर्थात् शीभाव एव विकल्पस्तदाह जस्कार्य्यं प्रतीति-

‡ संख्याया अवयवे तयविति (६६८पृ०) तयपः प्रत्ययत्वादाह तदन्ता इति ।

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्था-यामसंज्ञायाम्। १। १ ३४।

एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञागणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात्। पूर्वे पूर्वाः। स्वाभिधेयापेक्षा-ऽवधिनियमो (४९) व्यवस्था। व्यवस्थायां किम्। दक्षिणा गाथकाः (५०) कुशला इत्यर्थः। असंज्ञायां किम् उत्तराः कुरवः (५१)।

## स्वमज्ञातिधनाख्यायाम्। १। १। ३५।

ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्। स्वे स्वाः आत्मीया इत्यर्थः। आत्मान इति वा। ज्ञातिधनवाचिनस्तु स्वाः ज्ञातयोऽर्था वा।

---

(४९) पूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः दिशः सपत्नी-भव दक्षिणस्या इत्यादावपि व्यवस्थायामेव प्रसिद्धत्वात् नावधिवाची शब्दः प्रयुज्यते। आधुनिकसङ्केतस्यैव संज्ञात्वेन दिक्षु च तादृशसंज्ञा-विरहेण असंज्ञायामिति न निषेधप्रसङ्गः। अतएव वेदे प्रसिद्धदेवगण-विशेषे विश्वशब्दस्याधुनिकसंकेताभावात् विश्वेषां देवानामित्यादि-प्रयोगः। अत्र सूत्रे विभाषा जसीति (१०२सू०) सूत्रमनुवर्त्तते।

(५०) दक्षिणा गाथका इति दृष्टान्तवशात् कुशला इत्यर्थव्यवस्थायामपि तन्नियमो नास्तीति भावः।

(५१) उत्तराः कुरव इति उत्तरावधिमपेक्ष्य कुरुपूर्वशब्दो वर्त्तते इत्यत्रैव व्यवस्था किन्त्वाधुनिकसङ्केतोऽयमिति निषेधः। एवमपरे ताम्रकरागः। उत्तरे यक्षः उत्तरीन्निरंतः इत्यादि क्लिन्नस्रोः प्रत्युदाहर्त्तव्यम्। अत्रेदं बोध्यं परापरशब्दयोर्देशान्तरनिष्ठत्वमेव शक्यार्थतस्य च यतो

## अन्तरं बहिर्योगोपसंव्यानयोः। १। १। ३६।

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्। अन्तरे अन्तरा वा गृहाः बाह्या इत्यर्थः। अन्तरे अन्तरा वा शाटकाः परिधानीया इत्यर्थः।

## पूर्वादिभ्यो नवभ्यो वा। ७। १। १६।

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात्—पूर्वात्। पूर्वस्मिन्—पूर्वे। एवम्परादीनामपि। शेषं सर्ववत्। एकशब्दः संख्यायामित्येकवचनान्तः (५२)।

## न बहुव्रीहौ (५३)। १। १। २९।

बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात्। त्वकम्पिता यस्य स त्वकपितृकः। अहकम्पिता यस्य स मकपितृकः। इह समासात्प्रागेवालौकिके प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते। अन्यथा लौकिके विग्रहवाक्य इव तत्राप्यकच् प्रव-

---

प्रसिद्धादिति च बहुधा 'तेन तथा परेषां युधि' चेत्यादि, अथापरे प्रत्यवतिष्ठन्ते इत्यादिश्च प्रयोगः सङ्गच्छते न च बाह्यपिकत्वे उपसर्ज-नत्वं स्वार्थविशिष्टार्थान्तरसंक्रमस्यैव तथात्वात् तस्य च समासादि इत्तावेव सम्भवात्।

(५२) 'एकोऽल्पार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽपि संख्यायाञ्च प्रयुज्यते' इत्युक्तेरेकशब्दो नानार्थस्तत्र संख्यायामेवैकवच-नान्तता अन्यत्र तु यथेष्टता तेन एके एकेषामित्यादि।

(५३) न बहुव्रीहाविति। कृते तु बहुव्रीहौ निषेधो व्यर्थ उपसर्जनीभूतात्त्व न सर्वादय इति (१०१पृ०) वार्त्तिके प्रत्याख्यातत्वादत आह चिकी-र्षिते इति विग्रहसमासाभववाक्यसमर्थो बध्यते इति भावः।

द्वितीयायेत्यादि। एवम्तृतीयः। अर्थवद्ग्रहणान्नेह। पटुजातीयाय (६०)।

## जराया जरसन्यतरस्याम्। ७। २। १०१।

जराशब्दस्य जरस् वा स्यादजादौ(६१)विभक्तौ। पदाङ्गाधिकारे तस्य तदन्तस्य च अनेकाल्त्वात्सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा (६२) भवन्ति। एकदेशविकृतस्यानन्यत्वात् जरशब्दस्य जरस्। निर्जरसौ। निर्जरसः। इनादीन् बाधित्वा परत्वाज्जरस्। निर्जरसा। निर्जरसे। निर्जरसः। पक्षे हलादौ च रामवत्। वृत्तिकृता तु पूर्वविप्रतिषेधेन इनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसादिति रूपं न तु निर्जरसा निर्जरस इति केचिदित्युक्तम्। तथा भिसि निर्जरसैरिति

---

(६०) द्वेस्तीय इति(६७०सू०) सम्प्रसारणञ्चेति(६७१सू०) तीयः तस्यार्थवत्त्वादनर्थकस्यैकदेशस्य न ग्रहणमित्याह पटुजातीयायेति प्रकारवचने जातीयरिति(७०५सू०)जातीयप्रत्ययैकदेशेन प्रसङ्गः इति भावः।

(६१) जराया इति अष्टन आ विभक्ताविति (१६२सू०) विभक्ताविति अचि र ऋत इत्यतो (१२२सू०) अचीत्यनुवर्त्य यस्मिन् विधिस्तदादावल्ग्रहणे इति परिभाषाबलादाह अजादाविति विभक्तौ किं जराया इदं जारमित्यादौ न अचि किं निर्जराभ्यामित्यादौ न।

(६२) नन्विदमपूर्वं वचनमतः सोपसर्गस्य सर्वस्य स्थाने जरसादेश इत्याशङ्क्याह निर्दिश्यमानस्येति। ननु तदन्तविधिनापि जरान्तं यदङ्गं तत्रैव निर्दिश्यमानजराशब्दस्थाने जरसादेशेन भवितव्यं नातोऽनर्थकमित्याह एकदेशेति।

रूपान्तरमुक्तम् । तदनुसारिभिश्च षष्ठ्येकवचने निर्जर-स्येत्येव रूपमिति स्वीकृतमेतच्च भाष्यविरुद्धम् (६३) ।

**पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु । ६ । १ । ६३ ।**

पाद, दन्त, (६४)नासिका, मास, हृदय, निशा, असृज्, यूष, दोष, यकृत्, शकृत्, उदक, आस्य, एषां पदादय आदेशाः स्युः शसादौ वा (६५)। यत्तु आसनशब्दस्य आसन्नादेश इति काशिकायामुक्तन्तत्प्रामादिकम्(६६) । पादः । पादौ । पादाः । पादम् । पादौ । पदः-पादान् । पादेन-पदा इत्यादि ।

**सुडनपुंसकस्य (६७) । १ । १ । ४३ ।**

---

(६३) भाष्यविरुद्धमिति भाष्यकृता टाङसीति सूत्रं इनातौ प्रत्याख्याय नादेशमदादेशञ्च विधाय नादेशे परे आङि चाप इत्यत्राङीति योगं विभज्य एत्वसङ्का साधितं तथाच निर्जरेण निर्जरस्यादित्यत्र कृतस्तराभिनस्य आतश्च सम्भव इति भाष्यविरोधादुपेक्ष्यम् । अतएव सूत्रे भाष्ये स्पष्टमुक्तं निर्जरैरिति भवितव्यमिति ।

(६४) शस्प्रभृतयो निमित्तयोपात्ताः पदाद्यादेशानुरूपान् प्रकृतिविशेषानाक्षिपन्तीत्याशयेनाह पाददन्तेति ।

(६५) अनुदात्तस्य चर्दुपधस्यान्यतरस्यामित्यतः (६०१०५९०) अन्यतरस्यामित्यनुवर्त्त्याह शसादौ वेति ।

(६६) प्रामादिकमिति आद्यो इकस्य वर्त्तिकामभीके इति मन्त्रे सुखादिसर्थं औचित्यात् इकस्य चित् वर्त्तिकामन्तरा स्यादिति मन्त्रान्तरसंवादाच्च व्याख्यातञ्च तथैव वेदभाष्ये इति । ५मनो० ।

(६७) स्त्रीपुंसयोरिति वक्तव्ये अनपुंसकस्येति कथनं ज्ञापयति प्रसज्य-

सुट् प्रत्याहारः। स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य।

**स्वादिष्वसर्वनामस्थाने। १। ४। १७।**

कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वम्पदसंज्ञं स्यात्।

**यचि भम्। १। ४। १८।**

यकारादिष्वजादिषु च कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वम्भसंज्ञं स्यात्।

**आकडारादेका संज्ञा। १। ४। १।**

इत ऊर्द्ध्वं कडाराः कर्मधारय इत्यतः(३६५पृ०)प्रागेकस्यैकैव संज्ञा ज्ञेया। या परानवकाशा (६८) च। तेन प्रसादावपि भसंज्ञैव न पदत्वम्। अतो जश्त्वन्न। दतः। दता। जश्त्वम् दद्भ्यामित्यादि। मासः। मासा। भ्यामि रुत्वे यत्वे च यलोपः। माभ्याम्। माभिरित्यादि।

**भस्य। ६। ४। २९।**

अधिकारोऽयम्—

**अल्लोपोऽनः ६। ४। १३४।**

---

प्रतिषेधेऽपि नञ्समासस्याश्रितत्वं, तेनाब्रह्मण्यम्भ्रष्टमेत्यादि सिध्यतीति कैयटः।

(६८) या परेति उभयोः सावकाशत्वे विप्रतिषेधे परैव निरवकाशत्वे सैव।

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो(६९)योऽन् तस्याकारस्य लोपः स्यात्।

**रषाभ्यां नो णः समानपदे(७०)। ८। ४। १।**

एकपदस्थाभ्यां रेफषकाराभ्याम्परस्य नस्य णः स्यात्। यूष्णः। यूष्णा। पूर्वस्मादपि विधौ स्थानिवद्भाव इति (३४पृ०)पक्षे तु अड्व्यवाय(८१पृ०)इत्येवात्र णत्वम्। पूर्वत्रासिद्धे (७१) न स्थानिवदिति तु इह नास्ति तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति निषेधात्।

**न लोपः प्रातिपदिकान्तस्य। ८। २। ७।**

नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे। प्रातिपदिकसंज्ञकं यत्पदन्तदन्तस्य नकारस्य लोपः स्यात्। नलोपस्यासिद्धत्वाद्दीर्घमेत्त्वमैस्त्वञ्च न। यूषभ्याम्। यूषभिः यूषभ्य इत्यादि।

---

(६९) भस्येत्यधिकारादाह यजादिस्वादिपर इति यकाराजादिप्रत्ययपरोऽजादिस्वादिपरश्चेत्यर्थः।

(७०) पदे इतीयतैव एकपदत्वलाभे समानपदग्रहणं ज्ञापयति समासे नायं विधिरस्ति विशेषे प्रवर्त्तते इति।

(७१) पूर्वत्रासिद्धे इति एतच्च न्यायसिद्धम् त्रिपाद्या असिद्धत्वेन तत्रत्ये कार्ये अचः परस्मिन् (२४पृ०) इति प्रतिप्रसवाप्रवृत्तेः। तस्य दोष इति तस्य पूर्वत्रासिद्धे नेत्यादिकस्य दोषत्वाच्च संयोगान्तलोपे स्थानिवद्देवेति तस्य दोषो वक्तव्य इत्यर्थः। तत्र संयोगादिलोपे। चक्रात्र इकाचः परस्मिन्निति यणादेशस्य स्थानिवत्त्वेन स्कोः संयोगाद्योरिति (१६६पृ०) न कलोपः। सत्वे निगाद्यते। अत्र परनिमित्तकस्य णिज्लोपस्य स्थानिवत्त्वेन अचि विभाषेति (८१५पृ०) गिरोरोवः। णत्वे माषवपनीत्यत्र

## विभाषा ङिश्योः। ६।४।१३६।

अङ्गावयवोऽसर्वनामस्थानपरो योऽन् तस्याऽकारस्य लोपो वा स्यात् ङिश्योः परयोः। यूष्णि यूषणि। पक्षे रामवत् पद्दिति सूत्रे प्रभृतिग्रहणम्प्रकारार्थम्। तथा च औङः श्यामपि दोषन्नादेशो भाष्ये ककुद्दोषणी इत्युदाहृतम्। तेन पदङ्घ्रिश्चरणोऽस्त्रियां स्वान्तं हृन्मानसम्मन इति सङ्गच्छते। आसन्यम्प्राणमूचुरिति च। आस्ये भवः आसन्यः। दोष्‌-शब्दस्य नपुंसकत्वमतएव भाष्यात्। तेन दक्षिणन्दोर्निशाचर इति सङ्गच्छते। भुजबाहू प्रवेष्टो दोरिति साहचर्य्यात्पुंस्त्व-मपि। दोषन्तस्य तथाविधस्य भजत इति। द्वयोरह्नोर्भवो द्व्यह्नः।

## संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ। ६।३।११०।

संख्यादिपूर्वस्याह्नस्याहन्नादेशो वा स्यात् ङौ। द्व्यह्नि-द्व्यहनि द्व्यह्ने। विगतमहः। व्यह्नः। व्यह्नि व्यहनि व्यह्ने। अह्नः सायः। सायाह्नः। सायाह्नि सायाहनि सायाह्ने। इत्यदन्ताः। विश्वपाः।

## दीर्घाज्जसि च। ६।१।१०५।

---

ययेति (१२८४०) येनविधिस्तदन्तस्येति स्वामिनश्चैन मकारस्य प्रातिपदि-कान्तत्वाभावात् न नलोपः उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैवेति नलो-पविधौ नियमात्।

दीर्घाज्जसि इचि च (७२) परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् । वृद्धिः । विश्वपौ । सवर्णदीर्घः । विश्वपाः । यद्यपोह औङि नादिचीत्येव(७७पृ०)सिद्धं जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति । तथापि गौर्यौ गौर्य इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् ।

## आतो धातोः । ६ । ४ । १४० ।

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् । अलोऽन्त्यस्य (२८पृ०) । विश्वपः । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् । हाहान् । टासवर्णदीर्घः । हाहा । ङे वृद्धिः । हाहै । ङसिङसोर्दीर्घः । हाहाः२ । ओसि वृद्धिः हाहौः । ङौ आद्गुणः(४२पृ०) । हाहे । शेषं विश्वपावत् । आत इति योगविभागादधातोरप्याकारलोपः क्वचित् अः । क्त्वः । इत्यादन्ताः । हरिः । प्रथमयोःपूर्वसवर्णः (७७पृ०) हरी ।

## जसि च । ७ । ३ । १०९ ।

ह्रस्वान्तस्याङ्गस्य (७३) गुणः स्याज्जसि परे । हरयः ।

## ह्रस्वस्य गुणः । ७ । ३ । १०८ ।

---

(७२) चकारात् नादिचीत्यतो (७७पृ०) नेतीति इचीति च प्रथमयोरिति (७७पृ०) सूत्रद्वयानुवर्त्तनाद् इचीत्यादि ।

(७३) जसि चेत्यत्र ह्रस्वस्य गुण इत्यनुवर्त्तनाद् ह्रस्वान्तस्येत्यादि ।

लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या (१०७)। असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम्। वृषली। सत्यन्तं किम् शुक्ला। सकृदित्यादि किम् देवदत्ता।

गोत्रं च (१०८) चरणैः सह।

अपत्यप्रत्ययान्तः शाखाध्येतृवाची (१०९) च शब्दो जातिकार्यं(११०)लभत इत्यर्थः। औपगवी। कठी। बह्वृची। ब्राह्मणीत्यत्र तु शार्ङ्गरवादि (७४१४०) पाठान् ङीष् बाध्यते। जातेः किं मुण्डा। अस्त्रीविषयात्किम्। बलाका। अयोपधात्किम् क्षत्रिया। योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रति-

---

शुक्लादिगुणानामनेकत्वेनानुगताकारप्रतीतिविषयत्वेऽपि नियतलिङ्गत्वाभावाच्च जातित्वम् गुणिलिङ्गास्तु तद्वतीति तेषां त्रिलिङ्गत्वात्। शब्देन्दु०।

(१०७) अवयवसंस्थानस्य वृषलादिष्विव ब्राह्मणादिष्वविशेषात् वृषलत्वादिजातिर्न स्यादतो लक्षणान्तरमाह सकृदाख्यातेत्यादि। सकृदेकवारं यस्यां कस्याञ्चिद्व्यक्तौ ब्राह्मणोऽयं वृषलोऽयमित्युपदेशेन निर्ग्राह्या निश्चयेन ग्राह्येत्यर्थः।

(१०८) मुख्यजातिमभिधाय जातिकार्यकारित्वात्पारिभाषिकजातिमाह गोत्रं चेत्यादि। गोत्रं पुत्रपौत्रप्रभृतिवंशपरम्परा चरणो वेदशाखा।

(१०९) वेदशाखाया नियतस्त्रीविषयत्वात् जातिकार्याप्रसक्तावाह शाखाध्येतृवाचीति यद्यपि स्त्रीणामध्ययनविधेभावात्तदध्येतृत्वं नास्ति तथापि तद्योग्यतया तद्वाचिताऽनधीयानेऽपि माणवके तत्सम्बन्धात्तद्वदिति द्रष्टव्यम्।

(११०) जातिकार्यं ङीष् पुंवद्भावादिकं लभत इत्यनेन तत्कार्यकारितया पारिभाषिकमौपचारिकं वा जातित्वमिति दर्शितमिति भावः।

षेधः *। हयी। गवयी। मुकयी। हलस्तद्धितस्येति (२१८४०) लोपः। मानुषी। मत्स्यस्य ङ्याम्*। मत्सी।

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च।४।१।६४।

पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् स्यात्। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोवाली। ओषधिविशेषे रूढा एते।

इतोमनुष्यजातेः।४।१।६५।

ङीष् स्यात्। दाक्षी। योपधादपि *। औदमेयस्याऽपत्यम् औदमेयी। मनुष्येति किम्। तित्तिरिः (१११)।

ऊङुतः।४।१।६६।

उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात्। कुरूः। कुरुनादिभ्योण्यः (५१८६०) तस्य स्त्रियामवन्तीत्यादिना(५२१४०) लुक्। अयोपधात्किम्। अध्वर्युः(११२)। अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्*। रज्ज्वादिपर्युदासादुवर्णान्तेभ्यः (११३)एव। अलाब्वा (११४)। कर्कन्धूः। अनयो-

---

(१११) ङीषुङ्वोरप्रसक्त्या द्विपदः षट्पदोरगा इत्यभिधानात् तित्तिरिशब्दस्य स्त्रीत्वम्।

(११२) अध्वर्युर्याज्ञाध्यायिवंशोद्भवा।

(११३) अप्राणिजातेश्चेत्यत्र ऊत इति नानुवर्तते भाष्ये अलाबूकर्कन्धूप्रभृतीनां दीर्घोकारान्तानामपि उदाहरणाद् वार्तिकं उवर्णान्तेभ्य इति।

(११४) अलाब्वा कर्कन्धूरिति ओःसुपीति (६।४।८३सू०) यणादिपू-

दीर्घान्तत्वेऽपि नोङ्धात्वोरिति(६।१।१७५सू०)विभक्त्युदात्तत्वप्रतिषेधश्च फलम्। प्राणिजातेस्तु कृकवाकुः। रज्ज्वादेस्तु रज्जुः। हनुः।

### बाह्वन्तात् संज्ञायाम्।४।१।६७।

स्त्रियामूङ् स्यात्। भद्रबाहूः। संज्ञायाङ्किम्। वृत्तबाहुः।

### पङ्गोश्च।४।१।६८।

पङ्गूः। श्वशुरस्योकाराकारलोपश्च *(११५)। चादूङ्। पुंयोगलक्षणस्य ङीषोऽपवादः। लिङ्गविशिष्टपरिभाषया श्वादयः। श्वश्रूः।

### ऊरूत्तरपदादौपम्ये।४।१।६९।

उपमानवाचि (११६) पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तत आदूङ् स्यात्। करभोरूः।

### संहितशफलक्षणवामादेश्च।४।१।७०।

अनौपम्यार्थं सूत्रम्। संहितोरूः। सैव शफोरूः। शफो

---

दात्तत्वनिषेधात् तृतीयान्तोदाहरणं तद्विभक्तेरुदात्तत्वप्रदर्शनार्थं तस्यैवोङ्विधानफलत्वात्।

(११५) श्वशुरः श्वश्रूरिति (४।४।७१सू०)निर्देशादत्र श्वशुरशब्दान्त्याकारस्यैव लोपः।

(११६) उत्तरपदात्मिकं पूर्वपदं वापेक्षतया उपमानपदमेवेत्यावश्यकत्वात् उपमानवाचि पूर्वपदमिति अतएव करभोपमोरुरित्यर्थो न।

ऊरू ताविव संश्लिष्टत्वादुपचारात् (११७)। लक्षणशब्दादर्श आदित्वादच्। लक्षणोरूः। वामोरूः। संहितसहाभ्याञ्चेति वक्तव्यम्*। संहितेन सह संहितौ ऊरू यस्याः सा संहितोरूः। सहेते इति (११८) सहौ ऊरू यस्याः सा सहोरूः। यद्वा विद्यमानवचनस्य सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः।

## संज्ञायाम्। ४। १। ७२।

कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात्। कद्रूः। कमण्डलूः (११९)। संज्ञायां किम्। कद्रुः। कमण्डलुः। अच्छन्दोऽर्थं वचनम् (१२०)।

## शार्ङ्गरवाद्यञो(१२१)ङीन्। ४। १। ७३।

---

(११७) करभशब्दार्थसाधारणस्य संश्लिष्टत्वस्य ऊरुपदार्थे आरोपादित्यर्थः।

(११८) सहेते इत्यस्य कर्माकाङ्क्षायां अनभिमतस्याध्याहारस्तेनातिशयितरमणीयायित्यर्थः।

(११९) कद्रूः सर्पमाता कमण्डलूः चतुष्पाज्जातिविशेषः। अतएव चतुष्पाद्भ्यो ढञित्यत्र (५०६४०) कामण्डलेय इत्युदाहरिष्यति।

(१२०) अच्छन्दोऽर्थमिति वेदे तु संज्ञायामसंज्ञायाञ्च कद्रुकमण्डल्वोश्छन्दसीत्यनेन (४। १। ७१सू०) ऊङ् भवतीति भावः।

(१२१) शार्ङ्गरव कापटव, गौगुलव ब्राह्मण वैद गौतम कामण्डलेय ब्राह्मणकृतेय आनिचेय आनिधेय आशोकेय वात्स्यायन मौञ्जायन कैकस काव्य शैव्य एहि पर्येहि आश्मरथ्य, औदपान अराल चण्डाल वतण्ड भोगवत् गौरिमत् (एतौ संज्ञायाम्) नृ नर। शार्ङ्गरवादिः।

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात्। शार्ङ्गरवी। वैदी। जातेरित्यनुवृत्तेः पुंयोगे ङीषेव। नृनरयोर्वृद्धिश्चेति गणसूत्रम्। नारी।

**यङश्चाप् (१२२)। ४। १। ७४।**

यङन्तात् स्त्रियां चाप् स्यात्। यङ्ष्यङोः सामान्यग्रहणम्। आम्बष्ठ्या। कारीषगन्ध्या। षाद्यञश्चाप् वाच्यः *। पौतिमाष्या।

**आवट्याच्च। ४। १। ७५।**

अस्माच्चाप् स्यात्। यञश्चेति(११७सू०)ङीपोऽपवादः। अवटशब्दो गर्गादिः। आवट्या।

**तद्धिताः। ४। १। ७६।**

आपञ्चमसमाप्तेरधिकारोऽयम्।

**यूनस्तिः। ४। १। ७७।**

युवन्शब्दात्तिप्रत्ययः स्यात्स च तद्धितः। लिङ्गविशिष्टपरिभाषया (१२३) सिद्धे तद्धिताधिकार उत्तरार्थः। युवतिः।

---

(१२२) चापश्चित्त्वम् स्वरार्थं पित्त्वन्तु याडाप इत्यादौ सामान्यग्रहणार्थम्।

(१२३) लिङ्गविशिष्टेति अर्थवदधातुरप्रत्ययः प्रातिपदिकमित्यनेन (८४सू०) प्रत्ययान्तभिन्नस्य प्रातिपदिकसंज्ञाविधानेन टाबादीनां प्रत्ययत्वेन तदन्तानामप्राप्तेऽपि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण-मिति परिभाषया प्रातिपदिकत्वात् तिअन्तस्य तद्धितत्वं भविष्यतीति

अनुपसर्जनादित्येव। बहवो युवानो यस्यां सा बहुयुवा। युवतीति तु यौतेः शतन्तात् ङीपि बोध्यम्।

इति स्त्रीप्रत्ययाः।

---

किं तस्य तद्धितसंज्ञया तद्धितसंज्ञाफलीभूतस्य कृत्तद्धितसमासाश्चेति (८४पृ०) प्रत्ययान्तस्यापि प्रातिपदिकसंज्ञात्वस्योक्तपरिभाषयैव सिद्धेरिति भावः। उत्तरार्थं इति अस्त्रिओरनार्षयोः (४।१।७८) इत्याद्यर्थः इत्ययं करणन्तु स्पष्टार्थं लिङ्गविशिष्टपरिभाषाया अनित्यताद्योतनार्थञ्च।

**प्रातिपदिकार्थ (१) लिङ्गपरिमाणवचनमात्रे प्रथमा । २ । ३ । ४६ ।**

नियतोपस्थितिकः(२)प्रातिपदिकार्थः मात्रशब्दस्य प्रत्येकं (२)

---

(१) स्वौजसमौडिति (८६१पृ०) विहितस्वादीनामर्थविशेषव्यवस्थां दर्शयितु-माह प्रातिपदिकार्थेति । प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ता-भिरिहापि व्यवहारः । तथा च सर्वसिद्धान्तादस्मिन् शास्त्रे तासां संज्ञानामनभिधानेऽपि न क्षतिरिति विभावनीयम् ।

(२) स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्मादिरेव च ।
अमी पञ्चैव लिङ्गार्थास्त्रयः केषाञ्चिदग्रिमा ।

इत्युक्तदिशा यदि पञ्चकं प्रातिपदिकार्थस्तदा लिङ्गवचनयोः प्रातिपदि-कार्थतया तद्ग्रहणमनर्थकं प्रातिपदिकार्थ इत्यनेनैव सिद्धेः मात्र-ग्रहणाच्च कर्मादिव्यवच्छेदो न स्यात् कर्मादीनामपि प्रातिपदिकार्था-नतिरेकात् त्रिकपक्षे तु लिङ्गाग्रहणमनर्थकमेवेत्याशङ्क्य विवक्षितं दर्शयति नियतोपस्थितिक इति । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेन उपस्थितिः स तदर्थः शक्यार्थ इति यावत् डित्थो भावक इत्यादौ शक्यार्थमादाय प्रथमाविभक्त्युत्पत्त्यनन्तरं पदान्तरसमभिव्याहारेण तात्पर्यादिवशात् लक्ष्यार्थ बोधे सत्त्वभावा-दिति लक्ष्यार्थस्य नियतोपस्थितिकत्वाभावेऽपि न क्षतिः । तटादि-शब्दानान्तु नञ्समन्वयसमभिव्याहारे सकललिङ्गबोधकतया न किमपि लिङ्गं नियतोपस्थितिकमिति न तद्बोध्यलिङ्गस्य प्रातिपदिकार्थ-त्वेन ग्रहणमिति भावः । तथा च प्रातिपदिकार्थत्वे एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथेत्यनेकपक्षाणां सत्त्वात् द्योतिका वाचिका वा सुहित्यादीनां विभक्तय इत्युक्ते च द्वित्वादीनां विभक्तिवाच्यत्वपक्षे प्रातिपदिकस्य द्योतकतया द्योत्यार्थमादायैव स्वार्थैकत्वाभिधाय्य-भिहितमिति द्रष्टव्यम् ।

(२) प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रेऽतत्पदघटितवाक्ये मयूरव्यंस-

योगः प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये(४)परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात्। उच्चैः (५)। नीचैः। कृष्णः (६)। श्रीः। ज्ञानम्। अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम् अनियतलिङ्गास्तु लिङ्गमात्राद्याधिक्यस्य। तटः (७)। तटी। तटम्। परिमाणमात्रे द्रोणो व्रीहिः। द्रोणरूपं यत्परिमाणं (८) तत्परिच्छिन्नो व्रीहिरित्यर्थः। प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण

---

कादित्वात् (२६६पृ०) प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रमिति सिद्धम् द्वन्द्वान्ते श्रूयमाणस्य वकारार्थकमात्रपदस्य प्रत्येकं सम्बन्धात् प्रातिपदिकार्थमात्र इत्यादि क्रमेणान्वयः।

(४) मात्रपदेन कर्माद्याधिक्ये प्रथमा न भवेत् किन्तु लिङ्गपरिमाणवचनानां पृथग्ग्रहणात् तदाद्याधिक्ये एव भवेदित्याह लिङ्गमात्राद्याधिक्ये इति आदिपदेन परिमाणमात्राधिक्ये वचनमात्राधिक्ये चेत्यस्य ग्रहणम्। प्रातिपदिकार्थमात्रबोधेऽपि लिङ्गपरिमाणादेर्बोधासम्भवादाधिक्ये इत्युक्तम्।

(५) उच्चैरित्यादौ पदत्वेन रुत्वविसर्गार्थं प्रथमोत्पत्तिलोपौ। तथा चामे उच्चैस्तव त्वं चाम उच्चैस्ते समित्यादौ सपूर्वाया इति (°१७७पृ०) सूत्रेण सपूर्वप्रथमापूर्वकत्वाद्विकल्पेन ते इत्यादेश इत्यपि द्रष्टव्यम्।

(६) कृष्णो वासुदेवो न तु नीलगुणविशिष्टस्तस्य त्रिलिङ्गतया नियतलिङ्गत्वाभावात्।

(७) तट इत्येतत्र तटशब्दस्य सर्वलिङ्गभाक्त्वेऽपि [illegible]म-रकोशकाराणां मते इति द्रष्टव्यम्।

(८) परिमाणशब्दस्य परिच्छेदकरूपपरिमाणसामान्यपरः न तु "ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः। आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः" इत्युक्तपारिमाणिकपरिमाणपर इति बोध्यम्। द्रोणरूपपरिमाणस्य प्रातिपदिकार्थत्वे तस्य च व्रीह्यादौ परिच्छेद्य-

विशेषणम्। प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन द्रोणो विशेषणमिति विवेकः। वचनं (९) संख्या। एकः। द्वौ। बहवः। इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ (१०) वचनम् (११)।

---

परिच्छेदकभावेनान्वयो नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वान्न सम्भवतीति प्रथमार्थ एव परिमाणमित्यभिहितम् पाचकादिशब्दे प्रकृत्यर्थधात्वर्थस्य प्रत्ययार्थे भेदेनाऽन्वयेऽपि इन्द्रोदेवतास्येति वाक्ये सास्य देवतेति (५२०सू०) तद्धितार्थदेवताया इन्द्रादिभिरभेदेनाप्यन्वयस्य दृष्टचरत्वादत्रापि तथान्वय इति नाधिककल्पनेति भावः।

(९) वचनं संख्येति वाच्यवाचकयोरभेदाध्यवसायेन तथैव पूर्वाचार्याणां व्यवहारः।

(१०) उक्तार्थत्वादिति उक्तार्थानामप्रयोग इति न्यायेनाप्रयोगप्राप्तौ प्रातिपदिकप्रतिपादितसंख्यान्तराभावाच्च तदप्राप्तिस्तथा च अनन्वितार्थकविभक्तिप्रयोगापेक्षयाऽनुवादकविभक्तिप्रयोगस्य न्याय्यत्वात् न द्व्यादिशब्देभ्यः सर्वविभक्तिरिति भावः।

(११) परे तु अत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं तदाश्रयश्च उच्यते स च द्रव्यं तदारोपिततदाश्रयोऽपि अतएव लिङ्गपदग्रहणं सार्थकमन्यथा स्वमोर्नपुंसकादित्यादि(१४२सू०)शास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तद्वैयर्थ्यम्। एवञ्च प्रातिपदिकार्थ इत्यस्य अलिङ्गा अव्ययाः लिङ्गप्रवृत्तिनिमित्तकाः उच्चादय उदाहरणमन्ये सर्वेऽपि शब्दाः लिङ्गाविष्ट इत्यादेरुदाहरणानीति प्राहुः। शब्देन्दु०। स्वार्थद्रव्याभिधायित्वे स्वार्थो विशेषणं द्रव्यं विशेष्यं लिङ्गं स्त्रीत्वादि संख्या एकत्वादि कारकं कर्मादि इति पञ्चकमपि प्रातिपदिकार्थः दधि मध्वित्यादौ विनापि विभक्तिं प्रातिपदिकादेव तत्तदर्थप्रतीतेः वृक्षो वृक्षा वृक्षं वृक्षेणेत्यादौ विभक्त्यर्थविशेषबोधेऽपि विभक्तीनां द्योतकत्वेनैवोपयोग इति भाष्यकाराशयः। कैयटस्तु संख्यान्तचतुष्कं प्रातिपदिकार्थ इति मन्यते। अन्वयव्यतिरेकाभ्यां संख्याकारकादे-

**सम्बोधने च (१२)। २। ३। ४७।**

इह प्रथमा स्यात्। हे राम।

प्रथमा (१३)।

---

र्विभक्त्यर्थत्वनिश्चयात् त्रिकमेवेति वृत्तिकारः। संख्याकर्मादयस्तु विभक्तिवाच्या लिङ्गन्तु टाबादिवाच्यमिति द्विकमेवेत्यन्ये। जातेर्वाच्यत्वपरपर्य्यायाया अन्वयव्यतिरेकाभ्यां प्रातिपदिकार्थत्वं व्यक्तिभानन्तु आक्षेपादित्येकमेवेति केचित्।

(१२) सम्बोधने इति सम्बोधनाधिक्येऽप्राप्तावस्यारम्भः। प्रथमार्थः सम्बोधनं सम्बोधनञ्च प्रवर्तनाविषयबोधनादिफलकाभिमुख्यं तदुक्तं हरिणा

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।

प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते इति

अत्र क्रियासु विनियुज्यते इत्युक्तेः प्रजानि देवदत्तेत्यादावपि जानीहीतिपदाध्याहारेण सङ्गतिः। सिद्धस्येत्युक्तेन सम्बोधनस्यानुवाद्यमात्रविषयता न तु साध्यविषयता तेन राजा भव युध्यस्व, इन्द्रशत्रुर्वर्द्धस्वेत्यादौ राजादेर्न सम्बोध्यता। सम्बोधनञ्च प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणं राम मां पाहीत्यादौ रामसम्बन्धिसम्बोधनविषयो मत्कर्मकं रक्षणमिति बोधः। सम्बोधनस्य क्रियाया अविशेषणत्वे सम्बोधनपदस्य विभिन्नवाक्यान्तर्गतत्वात् "समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः" इति (१७६९०) वार्त्तिकात् प्रजानि देवदत्तेत्यादौ निघातस्य, अत्र राम नः पाहीत्यादौ नसादेशस्य च नानुपपत्तिरित्यलम् प्राक्। प्रपञ्चितञ्चैतदस्माभिः शब्दार्थरत्ने।

(१३) अत्रेदं बोध्यम् कर्मादिषु शक्तिषु लकारकृदादिभिरभिहितेषु तत्समानाधिकरणे प्रथमैव तिङ्समानाधिकरणे प्रथमेति अभिहिते प्रथमेति च वार्त्तिकोक्तेः। प्रकृतिविकृतिभावे तु उभयोरपि तिङर्थ

**कारके (१४) । १। ४ । २३ ।**

इत्यधिकृत्य ।

**कर्तुरीप्सिततमं (१५) कर्म । १ । ४ । ४९ ।**

कर्त्तुः क्रियया व्याप्तुमिष्टतमङ्कारकं कर्म्मसंज्ञं स्यात् ।

---

अभिहितार्थत्वात् प्रथमा । परन्तु तत्र तिङा प्रकृतेरेव संख्यानुवादेन संख्यानूद्यते न तु विकृतेरपि यथोक्तं हरिणा प्रकृतेर्विकृतेर्वापि यत्रोक्तत्वं द्वयोरपि । वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तु वाचकस्तिङादिशब्दः प्रकृतेः संख्यां गृह्णाति अनुवदतीत्यर्थः । अत्र यत्रेत्युक्तेः क्वचिदुक्तत्वाभावे नामार्थे एव प्रथमेति सूचितम् तेन नौका भूत्वा वृक्षो निर्वां गत इत्यादौ नौकाया नामार्थे एव प्रथमेति बोध्यम् । उद्देश्यविधेयभावस्थले तूभाभ्यामेवोक्तार्थतया प्रथमा । संख्याविशेषपक्षयानु विवक्षावशादुभयोरेव पर्य्यायेण भवति तेन एको वृक्षः पञ्च नौका भवतीत्यादिवत् न नियमः किन्तु वेदाः प्रमाणं भवति भवन्ति वेत्यादि प्रयोग इति । प्रथमा ।

(१४) कारके इति । करोति कर्त्तृत्वादिव्यपदेशानिति कारकशब्दः क्रियावचनस्तथा च क्रियायामित्यर्थः एवं चेतः परमधिकरिष्यमाणानां क्रियायामेवान्वयः कारकाणां साधनत्वेन साध्यक्रियायां साधनापेक्षणात् ।

(१५) कर्तुरित्यादि । कर्त्राप्तुमिष्यमाणं कर्मेत्यर्थः धातूपात्तव्यापाराश्रयः कर्त्तेति(२६८०)वक्ष्यते आप्तिश्च सम्बन्धः स च कर्त्तृविशेषणीभूतक्रियारूपव्यापारद्वारक एवोपस्थितपरित्यागेनानुपस्थितकल्पने मानाभावात् एवञ्च कर्त्रा स्वनिष्ठक्रियारूपव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणं कर्मेत्यर्थः तदेतदाह कर्त्तुः क्रियया व्याप्तुमिति । क्रियया धातूपात्तव्यापारेण व्याप्तुं धातूपात्तफलद्वारा सम्बन्धुं फलव्यापारयोर्धातूपात्तत्वन्तु फलव्यापारयोर्धातुरांश्रये तु तिङः स्मृता इत्यनेन सिद्धम् । तत्र कर्म्म चतुर्विधम् यथोक्तं हरिणा ।

कर्त्तुः किम् । माषेष्वश्वं बध्नाति । कर्म्मण ईप्सिता माषा न तु

---

निर्वर्त्त्यञ्च विकार्यञ्च प्राप्यञ्चेति त्रिधा मतम् ।
तच्चेप्सिततमं कर्म चतुर्द्धान्यत्तु कल्पितम् ।
औदासीन्येन यत् प्राप्यं यच्च कर्त्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकमिति ।

तत्र निर्वर्त्त्यादीनां लक्षणादिकमपि तेनैवोक्तं यथा ।

यदसज्जायते सद्वा जन्मना यत्प्रकाशते ।
प्रकृतेस्तु विवक्षायां विकार्य्यं, कैश्चिदन्यथा ।
तन्निर्वर्त्त्यं विकार्यञ्च कर्म द्वेधा व्यवस्थितम् ।
प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत् ।
किञ्चित् गुणान्तराधानात् सुवर्णादिविकारवत् ।
क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते ।
दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते इति
सती वा विद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्त्यत्वं प्रचक्षत इति च ।

तदयं लक्षणनिष्कर्षः ।

प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति क्रियाजन्योत्पत्तिरूपफलवत्त्वं निर्वर्त्त्यत्वम् यथा घटं करोतीत्यादौ घटादेः क्रियाजन्योत्पत्तिमत्त्वात् निर्वर्त्त्यत्वम् । प्रतीयमानप्रकृतिविकृतिभावत्वे सति क्रियानिर्वाह्यविशिष्टावस्थोत्पत्तिरूपान्यतरफलवत्त्वं विकार्य्यत्वम् यथा सुवर्णं कुण्डलं करोतीत्यादौ सुवर्णस्य पूर्वरूपविशिष्टावस्थफलवत्त्वात् कुण्डलस्य चोत्पत्तिमत्त्वादुभयोरपि विकार्य्यत्वम् । क्रियाकृताधारत्वधर्मप्रकारकप्रतीतिविषयतानाश्रयत्वे सति क्रियाजन्यफलवत्त्वेनोद्देश्यत्वम् प्राप्यत्वं यथा ग्रामं गच्छतीत्यादौ ग्रामादेः कर्त्तृसाधारणसंयोगरूपफलवत्त्वेऽपि क्रियाकृतभङ्गादिरूपाधाराधारत्वविशेषकत्वस्यावच्छेदेन तादृशफलप्रकारकबोधाविषयत्वात् प्राप्यत्वम् । निर्वर्त्त्यादीनान्तु क्रियाजन्योत्पत्त्यादिफलस्य कर्मनिष्ठतया

कर्त्तुः। तमग्रहणं किम्। पयसा (१६) ओदनं भुङ्क्ते। कर्मेत्यनुवृत्तौ (१७) कर्मग्रहणमाधारनिवृत्त्यर्थम्। अन्यथा गेहं प्रविशतीत्यत्रैव स्यात्।

**अनभिहिते।२।३।१।**

इत्यधिकृत्य।

**कर्मणि द्वितीया।२।३।२।**

अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति (१८)। अभि-

---

असाधारण्येन तद्वत्त्वाभावातिप्रसङ्ग इति बोध्यम्। कर्त्तुरनुद्देश्यत्वे सति क्रियाजन्यफलवत्त्वम् औदासीन्यं ग्रामं गच्छन् तृणं स्पृशतीत्यादौ तृणादेरनुद्देश्यत्वेऽपि क्रियाजन्यसंयोगरूपफलवत्त्वेनोदासीन कर्मता। द्विष्टसाधनत्वे सति क्रियाजन्यफलवत्त्वं द्वेष्यत्वं यथा अन्नं बुभुक्षुर्विषं भुङ्क्ते इत्यादौ विषस्य तथात्वम्। कारकविशेषसंज्ञान्तरेणाविवक्षितत्वे सति कर्मोपकारकत्वम् संज्ञान्तरैरनाख्यातत्वम् यथा गां पयो दोग्धीत्यादौ गवादेः कारकान्तरसंज्ञाया अविवक्षया दुग्धोपयोगितया च कर्मत्वम् व्यक्तीभविष्यति चेदमुपरिष्टात्। (२५२पृ०) कारकान्तरसंज्ञापूर्वकत्वमन्यपूर्वकत्वं यथा हरिर्जलधिमधिशेते इत्यादौ जलधेराधारसंज्ञकतया प्राप्तत्वेऽपि अधिशीङ्स्थासामित्यादिना(२६०पृ०)कर्मसंज्ञया कर्मत्वम्।

(१६) पयसेति भुजिक्रियां प्रति पयसः प्रकृष्टोपकारकत्वविवक्षायां तस्यैवेप्सिततमत्वात् पयः पिबतीति स्यादेव इह तु तथा विवक्षाविरहेण ओदनभोजनं प्रति तस्याङ्गतया करणत्वमात्रं विवक्षितमिति न तस्य कर्मत्वमिति भावः। सहार्थे तृतीयेति तु न्याय्यम् तस्याप्रधानत्वात् तत्पाबोधकविभक्त्यभावात्।

(१७) कर्मेत्यनुवृत्तावित्यस्य अधिशीङ्स्थासां कर्मेति(२६०पृ०)सूत्रादित्यादिः।

(१८) हरिमिति भजनक्रियया हरौ प्रीत्युत्पादनात् प्रीतिविशिष्टतया

हिते(१९) तु कर्मणि प्रातिपदिकार्थमात्र इति प्रथमैव । अभिधानन्तु प्रायेण तिङ्कृत्तद्धितसमासैः । तिङ् । हरिः सेव्यते । कृत् । लक्ष्म्या सेवितः । तद्धितः । शतेन क्रीतः शत्यः । समासः । प्राप्त आनन्दो यं स प्राप्तानन्दः (२०) । क्वचिन्निपा-

---

क्रियाव्याप्यत्वेन हरेः कर्मत्वं हरिनिष्ठप्रीत्यनुकूल एकदेवदत्ताभिन्नाश्रयको वर्त्तमानो व्यापार इति निष्कृष्टार्थबोधः । क्रियाप्रधानमाख्यातमिति सिद्धान्तेन सर्वत्रैव क्रियायाः मुख्यविशेष्यताङ्गीकारात् तथा बोधः । विस्तरस्तु शब्दार्थरत्नेऽस्माभिरभिहितस्तत्रैव द्रष्टव्य इत्यत्र बाहुल्यभिया विरतम् ।

(१९) अभिहिते त्विति प्रधानक्रियापेक्षितप्रत्ययेनाभिहिते इत्यर्थस्तेन पक्वमोदनं भुङ्क्ते इत्यादौ पचिक्रियानिरूपितकर्मशक्तेरुक्तत्वेऽपि न प्रथमा यथोक्तम् हरिणा प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् । शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते इति । ओदनस्य पचिभुजिक्रियापेक्षया द्वे एव कर्मशक्ती तत्र प्रधानक्रियापेक्षितशक्तेरनभिधानाच्च प्रथमेति बोध्यम् । अधिकमुक्तं प्रथमार्थनिरूपणे(२४७,४८,५०)। इदन्तु बोध्यं बहुपटुरित्यादौ बहुच्प्रत्ययेनोक्तार्थत्वाद्यथा कप्प्रत्ययो न प्रवर्त्तन्ते तथा क्रियते घट इत्यादौ तिङोक्तार्थत्वात् न द्वितीया भविष्यतीति अनभिहित इति सूत्रस्यानावश्यकत्वेऽपि संख्याया विभक्त्यर्थत्वपक्षे सूत्रस्यावश्यकता तथाहि कर्मणि द्वितीयेत्यस्यानभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति सूत्रार्थः स्वीकार्यः । तत्सूत्रानारम्भे तु कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति हि सूत्रार्थः सम्पद्यते तथा सति ततः घट इत्यादौ तिङा कर्मत्वोक्तावपि तदेकत्वस्य कर्मनाशकतया तत्र द्वितीयैकवचनम् दुर्वारं स्यात् यत्नेन प्रथमाद्यर्थमस्तु कर्त्तव्यः घट इत्यादौ ततोऽपि यत्नेन प्रथमैकवचनस्या दुर्वारत्वापत्तेरविशिष्टत्वम् ।

(२०) आनन्दकर्तृकप्राप्तिकर्मीभूतः समासार्थः ।

तेनाभिधानम् । यथा, विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम् (२१) । साम्प्रतमित्यस्य हि युज्यत इत्यर्थः ।

**तथा युक्तञ्चानीप्सितम् (२४) । १ । ४ । ५० ।**

ईप्सिततमवत् क्रियया युक्तमनीप्सितमपि कारकङ्कर्मसंज्ञं स्यात् ग्रामङ्गच्छन् (२२) तृणं स्पृशति । ओदनं बुभुक्षुर्विषं भुङ्क्ते ।

**अकथितञ्च (२४) । १ । ४ । ५१ ।**

---

(२१) पक्षे तु अत्र तुमुनः साधुत्वायेष्यत इति पदाध्याहार आवश्यकः अन्यथा क्रियार्थोपपदत्वाभावाच्छकादियोगाभावाच्च तुमुनुत्पत्तिर्दुर्लभा स्यात् । एवञ्च तस्याध्याहारे इच्छार्थयोगे तुमुन् सुलभः । तथा च विषवृक्षोऽपि सम्वर्द्ध्य छेत्तुमिष्यते इति यत्तदसाम्प्रतमन्याय्यमित्यर्थः सम्पद्यते एवं चाध्याहृततिङाभिधानात्तत्र द्वितीयाप्रसक्तिरित्यनुदाहरणमेवैतत् । एतेन क्षमादमं, नारद इत्यबोधि स इत्यप्यनुदाहरणम् तत्र नारदइति श्रीकृष्णीयज्ञानाकारानुकरणं नारद इत्येतच्छब्दाभिलप्यमानाकारो बोध इत्यर्थः एवञ्चेतिशब्देन तादृशार्थस्योक्ततया न द्वितीयेति तत्र प्रातिपदिकार्थे प्रथमैवेति द्रष्टव्यमित्याहुः । मन्त्रेन्द्र,० ।

(२२) अनीप्सितमिति ईप्सितादन्यदिति पर्य्युदासात् यदुपेक्ष्यं यच्च द्वेष्यं तदुभयमित्यर्थः तच्च सर्वं सप्रधाविभागसमये (२४९४०) दर्शितम् । युक्तं क्रिययेति शेषः समभिव्याहृतधात्वर्थप्रधानव्यापारजन्यधात्वर्थफलेन युक्तमित्यर्थः । पराधीनतया विषभोजने तु विषस्य क्रियाफलाश्रयत्वेनोद्देश्यत्वात् कर्तुरीप्सिततममित्यादिना (२४८४०) कर्मत्वम् ।

(२३) अनीप्सितस्य द्वैविध्यमुदाहरणेन दर्शयति ग्रामं गच्छन्नित्यादिना यथा ईप्सितस्य ग्रामादेः क्रियाजन्यसंयोगयोगस्तथाऽनीप्सितस्यापि तृणादेरपीति भावः । तथा च ग्रामं गच्छतस्तृणस्पर्शनं नान्तरीयकमिति तस्यानीप्सितत्वम् । उपेक्ष्यत्वञ्च इच्छाद्वेषयोरभाव इति बोध्यम् ।

(२४) अकथितमिति । अपादानादिविशेषैरविवक्षितमित्यर्थः ।

अपादानादिविशेषैरविवक्षितं कारकं (२५) कर्मसंज्ञं स्यात्।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥

दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाऽकथितं कर्मेति परिगणनं कर्तव्यमित्यर्थः। गां दोग्धि (२६) पयः। बलिं याचते (२७) वसुधाम्। अविनीतं विनयं याचते। तण्डुलानोदनं पचति (२८)। गर्गान् शतं

---

एवञ्च पूर्वविधिविषयप्रसक्तिपूर्वकं तदविवक्षायां पूर्वविधेरप्रसक्तौ चैतत्सूत्रप्रवृत्तिरिति बोध्यम्। अपादानत्वादिविवक्षायां पञ्चम्याद्येव गोर्दुग्धं दोग्धीति बलेर्धनं याचते इति व्रजे गां रुणद्धीत्यादि।

(२५) कारकमिति क्रियाजनकं क्रियान्वितं वेत्यर्थः तेन ब्राह्मणस्य पुत्रं पृच्छतीत्यादौ ब्राह्मणस्य न कर्मत्वम्। कर्मयुक् कर्मणा क्रियया युज्यते सम्बध्यतेति कर्मयुक् कर्म क्रिया तस्मात्स्यात् इत्यमरोक्तेः। तथा च कर्मणा क्रियया सह संबध्यमानं कारकमपादानादिविशेषैरकथितं कर्मसंज्ञं भवतीत्यर्थः।

(२६) अन्तःस्थितद्रवद्रव्यविभागानुकूलो व्यापारो दुहेरर्थः तत्र गोरपादानत्वाविवक्षायामनेन कर्मत्वमेवमन्यत्रापि। तद्विवक्षायां पञ्चमी गोः पयःसम्बन्धविवक्षायां षष्ठी तस्याश्च न क्रियायामन्वयः अनभिधानात् पञ्चम्यन्तस्य चान्वयोऽन्यनामसमभिव्याहारे तत्रैवान्वयस्योत्सर्गतो व्युत्पन्नत्वाच्च।

(२७) स्वनिष्ठस्वत्वोत्पत्त्यनुकूलव्यापारो देहीत्याद्यभिलापरूपो याचेरर्थः बलेः स्वत्वे निरूपकतयान्वयः पूर्वविवक्षायाः अपादानत्वाभावादेवाविवक्षेति बलेः कर्मत्वम्।

(२८) विक्लित्त्यनुकूलव्यापारपूर्वकोत्पत्त्यनुकूलव्यापारः पचेरर्थः तण्डुलानिमित्तकम् ओदनं निर्वर्तयतीति भावे पञ्चम्यर्थविवक्षणाभावात् तथार्थता।

दण्डयति (२९)। व्रजमवरुणद्धि (३०) गाम्। माणवकं पन्थानम्पृच्छति (३१)। वृक्षमवचिनोति (३२) फलानि। माणवकन्धर्मं ब्रूते (३३) शास्ति वा (३४)। शतञ्जयति (३५) देवदत्तम्। सुधां क्षीरनिधिम्मथ्नाति (३६)। देवदत्तं शतं मुष्णाति। ग्राममजां नयति (३७) हरति (३८)

---

(२९) शासनानुकूलस्वसम्प्रदानानुकूलव्यापारो दण्डयतेरर्थः।

(३०) निर्गमप्रतिरोधपूर्वकयत्किञ्चिदधिकरणकस्थित्यनुकूलो व्यापारो रुधेरर्थः। व्रजे गौस्तिष्ठति तां निर्गमप्रतिबन्धेन स्थापयतीति सम्प्रत्ययात्। अधिकरणत्वाविवक्षयाऽनेन व्रजस्य कर्मत्वम्।

(३१) जिज्ञासाविषयार्थज्ञानानुकूलः केन पथा गन्तव्यमित्याद्यभिलापादिरूपो व्यापारः प्रच्छेरर्थः ज्ञानविषयत्वेन पथः कर्मत्वम् तज्ज्ञानाश्रयत्वात् माणवकस्य कर्मत्वम्।

(३२) विभागपूर्वकादानं चिञोऽर्थः वृक्षात् फलान्यादत्ते इत्यर्थात् अपादानत्वाविवक्षायां कर्मत्वम्।

(३३) ज्ञानानुकूलः शब्दप्रयोगः ब्रुवेरर्थः।

(३४) प्रवृत्तिजनकज्ञानानुकूलः शब्दप्रयोगः धर्मं कुर्वित्यादिविधिविषयोपदेशरूपः शास्तेरर्थः।

(३५) अभिभवपूर्वकं ग्रहणं जयतेरर्थः।

(३६) विलोडनपूर्वकोत्थापनं मन्थतेरर्थः।

प्रवञ्चनपूर्वकं ग्रहणं मुषेरर्थः।

(३७) संयोगानुकूलव्यापारानुकूलो व्यापारो नयतेरर्थः।

(३८) बलादपहरणपूर्वकदेशान्तरनयनं हरतेरर्थः।

दुह्याचादिकं तु भाषामनुरोधेन एतमेवेषां द्विव्यापारार्थबोधकतये-
प्रतिपत्तव्यं नैव द्विकर्मत्वविधेरेकव्यापारार्थका एव भाष्ये स्वीकृता यथा
दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविनेति।

कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिम्भिक्षते वसुधाम् । माणवकन्धर्म्मम्भाषते अभिधत्ते वक्तीत्यादि । कारकं किम् । माणवकस्य पितरम्पन्थानं पृच्छति । अकर्म्मक (१८) धातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्म्मसंज्ञक इति वाच्यम् * । कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते ।

---

तथा च दुहादीनामेकव्यापारार्थकतया पूर्वेणाप्राप्तेऽपूर्वविधानमितरेषान्तु भिन्नव्यापारार्थकतया पूर्वेण सिद्धत्वाद्वाकथितत्वमिति भावः । उपयोगनिमित्तमिति प्रधानकर्मोपयोगीत्यर्थः । नृ विशाखिगुणेन नृ विशाखोर्निरुक्तार्थे गुणीभूतानेन यत् वदते संज्ञाति तज्ञानवत्त्वेनोद्देश्यं यत् तदकथितं कर्मेत्यर्थस्तेन माणवकादेः ग्रामगाद्यर्थगुणीभूतज्ञानवत्त्वेनोद्देश्यत्वेन सम्प्रदानत्वप्राप्तौ तद्विवक्षायामनेन कर्मत्वमिति बोध्यमधिकं मत्कृतयज्ञार्थरत्ने द्रष्टव्यम् ।

(१८) अकर्मकेति धातोरर्थौ व्यापारः फलञ्च । तत्र फलसमानाधिकरणव्यापारबोधकोऽकर्मकः फलव्यधिकरणव्यापारबोधकः सकर्मकः

फलव्यापारयोरेकनिष्ठतायामकर्मकः ।

धात्वर्थयोर्धर्मिभेदे सकर्मक उदाहृत इति हर्युक्तेः

अस्ति भवतीत्यादौ सर्वत्रैव सत्ताकालसम्बन्धोत्पादरूपव्यापारयोश्च बोधकत्वेनोभयोः कर्तृनिष्ठत्वादकर्मकत्वम् पचति गच्छतीत्यादौ विक्लित्तिसंयोगादिजनकव्यापारयोरभूयनिष्ठत्वात् सकर्मकत्वम् एवञ्च मासमास्ते इत्यादौ सर्वत्राकर्मकधातूनां सकर्मकव्याख्यादिनभित सार्थपरतायांतात्पर्य्यं वाच्यमिदं फलं तदुक्तं हरिणा

कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः ।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते इति ।
अतस्तैः कर्मसंयुक्तो धात्वर्थैरकर्मकः ।
तत्र कर्मणि भावे च तिङि तस्याश्च कल्पते इति च ।

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणा-मणिकर्त्ता स णौ। १। ४। ५२।**

गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणाञ्चाणौ (४०) यः कर्त्ता स णौ कर्मसंज्ञः स्यात्।

---

अस्यायं भावः मासमास्ते इत्यादौ धातोरेव सम्बन्धपूर्वकास-नादौ आसनादिकरणकसम्बन्धे वा निरूढलक्षणया ज्ञापकमेतद्वा-र्त्तिकम् तत्र धातोराद्यार्थलक्षणायां प्रधानक्रियाया अकर्मकत्वात् दुहादिषु पाठाभावाच्च गौणकर्मणि लकारासम्भवेन भाव एव ल-कारस्तेन मासमास्यत इत्येव प्रयोगः द्वितीयार्थलक्षणायान्तु प्रधान-क्रियायाः सकर्मकतया कालादेस्तत्कर्मत्वेन मुख्यकर्मण्येव लका-रस्तेन मास आस्यते इति प्रयोग इति विवेकः। अत्र लस्येत्यभि-धानात् तद्योगे न तेभ्यः षष्ठीति ध्वनितमिति मनोरमायां स्पष्टम्। तथा कालादिकर्मका अकर्मका भवन्तीति भाष्योक्तेस्तेषामकर्मकतया गतिबुद्ध्यादिसूत्रेण तेषां प्रयोज्यकर्तुः कर्मसंज्ञा भवतीत्यन्यत्र विस्तरः। अत्र देशः कुरुपाञ्चालादिनाम्ना प्रसिद्धो भूभागः न तु ग्रामादिरूपै-कदेशमात्रं तेन ग्रामं स्वपितीति न प्रयोगः। अध्वा गन्तव्यदेशः। कालो मासमासादिः। भावो धात्वर्थ इति बोध्यम्।

(४०) अणौ यः कर्त्तेति। अनुत्पन्ने णिचि केवलधातुवाच्यां क्रियां प्रति यः कर्त्ता स ण्यन्तधातुवाच्यां क्रियां प्रति कर्मसंज्ञः स्यादि-त्यर्थः। नियमार्थमिदम् सूत्रमिति प्राहुः।

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः।
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते इति

-गुणक्रियायां विशेषणक्रियायामप्रधानक्रियायां स्वातन्त्र्यात् कर्तृ-त्वात् प्रेषणे प्रधानक्रियायां कर्मतां गतोऽपि कर्त्ता नियमात् कर्म-

शत्रूनगमयत् (४१) स्वर्गं वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥ १ ॥
आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥ १ ॥

गतीत्यादि किम् पाचयत्योदनन्देवदत्तेन (४२) । अण्यन्तानां किम् गमयति देवदत्तो यज्ञदत्तन्तमपरः प्रयुङ्क्ते गमयति

---

संज्ञाया धातुविशेषयोगे एव विधानात् पाचयति देवदत्तेन यज्ञदत्त इत्यादौ स्वधर्मेणैव तृतीययैव अभिधीयते इत्यर्थः । अन्ये तु • अपूर्वमेवेदं विधानम् ।

परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च ।
प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोऽपितेत्युक्तिरित्याहुः ।

तेषामयमाशयः कर्मापेक्षया कर्तृसंज्ञायाः परत्वात् णिजन्तप्रकृतीभूतधातूपस्थाप्यक्रियायां स्वातन्त्र्येणान्तरङ्गत्वात् कर्तुरेव सर्वकारकप्रयोजकतयोपजीव्यतया उपजीव्यजातीयतया कर्मसंज्ञा अप्राप्तौ गत्यादियोगे विधीयते नान्ययोगे इति ।

(४१) शत्रूनिति स्वर्गकर्मकशत्रुनिष्ठगमनानुकूलो हरिकर्तृकोऽतीतो व्यापार इत्यादिक्रमेण बोधः ।

(४२) अत्रेदं बोध्यं शत्रूणामनेन कर्मत्वे सति कर्मण एवेप्सिततमः स्वर्गो न तु कर्तुरिति स्वर्गादेः कर्मत्वानुपपत्तावपि गतिबुद्धीत्यादिना विहितकर्मत्वस्य यत्नवापेक्षतया बहिरङ्गत्वात् ततः पूर्वमेवाण्यन्तधात्वर्थव्यापारस्यान्तरङ्गतया स्वातन्त्र्येण च तस्य कर्तृत्वात् तत्प्रयुक्तमेव स्वर्गादेः कर्मत्वमिति बोध्यम् एवञ्चोभयत्रापि कर्मत्वं धातुविशेषसहकारेण पर्यायेणोभयोरेव चाहिविधानं यथोक्तं भाष्यकृता ।

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः इति ।

द्विकर्मणां द्विव्यापारार्थकधातूनामाख्यातानाम् प्रधानकर्मणि प्रधानव्यापारव्याप्यकर्मण्याख्येये लादयो भवन्तीत्यर्थः । दुहादीनां दुहादि-

देवदत्तेन यज्ञदत्तं विश्वामित्रः। नीवह्योर्न* (४३)। नाययति वाहयति वा भारम्भृत्येन। नियन्तृ (४४) कर्तृकस्य वहेरनिषेधः*। वाहयति रथं वाहान् सूतः। आदिखाद्योर्न (४५)*। आदयति (४६) खादयति वान्नं वटुना।

---

व्यापारार्थकत्वपक्षेऽप्रधाने अप्रधानव्यापारकर्मणि लादीनामुरित्यनुपद्यते। ण्यन्तद्विकर्मकाणां पुनः कर्मसंज्ञां प्राप्तस्य कर्त्तुश्च कर्त्तर्य्येव कर्तृरूपकर्मणीत्यर्थः। तत्राप्ययं विशेषः।

बुद्धिभक्षार्थयोः शब्दकर्मणाञ्च निजेच्छया।

प्रयोज्यकर्मण्याख्येये ण्यन्तानां लादयो मता इति।

दुहादीनामपि विशेषोऽस्ति यथा

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहामिति।

अतएव सूत्रकारदृष्टे दुह्याजित्यादिप्राचीनवाक्ये तथा स्यात् नीहृकृष्वहामिति गणभेदेन पाठः। एवञ्च दुहादीनां षोडशानां मध्ये द्विव्यापारार्थकबोधकानां दण्डिमन्थादीनां पाठः गौणकर्मणि लकारादिविधानार्थमन्यथा प्रधानकर्मण्याख्येये लादीनामुरित्युक्तेरविशेषात् प्रधानकर्मण्येव मन्थादिभ्यो लकाराद्यापत्तिर्न च तथा युक्तं गर्गाः शतं दण्ड्यन्तामिति भाष्यप्रयोगस्य देवासुरैरमृतमम्बुनिधिर्ममन्थे इति भारविप्रयोगस्य च गौणे कर्मण्येव लादिदर्शनात्।

(४३) नीवह्योरिति अनयोः प्रापणार्थत्वेन गत्यनुकूलव्यापारस्य च प्रापणतया तन्मध्ये गतेरपि प्रवेशात् गत्यर्थतया प्राप्तो निषेधः।

(४४) नियन्ता पशुप्रेरकस्तत्कर्तृकस्य न तु वाहयितैव तेन वाहयति बलीवर्दान् यवानिति प्रयोगः सङ्गच्छते। तत्त्व०।

(४५) आदिखाद्योः प्रत्यवसानार्थतया प्राप्तो निषेधः प्रत्यवसानं भक्षणम्।

(४६) आदयतीति णिगरणचलनार्थेभ्यश्चेति (उ२६१पृ०)न परस्मैपदनियमः अदेः प्रतिषेध इति(उ२६५पृ०)तस्य प्रतिषेधात् तेनात्र कर्त्रभिप्राये शेषात् कर्त्तरीति(उ५पृ०)परस्मैपद कर्त्रभिप्राये तु आत्मनेपदं भवत्येव

भक्षेरहिंसार्थस्य (४७) न * । भक्षयत्यन्नं वटुना । अहिंसार्थस्य किम भक्षयति बलीवर्दान् सस्यम् । जल्पति प्रभृतीनामुपसंख्यानम् * । जल्पयति (४८) भाषयति पुत्रन्देवदत्तः । दृशेश्च * । दर्शयति हरिम्भक्तान् । सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणन्न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते तेन स्मरति जिघ्रतीत्यादीनान्न । स्मारयति घ्रापयति देवदत्तेन । शब्दायतेर्न (४९) * । शब्दाययति देवदत्तेन । धात्वर्थसंगृहीतकर्मकत्वेनाकर्मकत्वात्प्राप्तिः । येषान्देशकालादिभिन्नङ्कर्म न सम्भवति तेऽत्राकर्मकाः न त्वविवक्षित (५०) कर्माणोऽपि । तेन (५१) मासमासयति देवदत्तमित्यादौ कर्मत्वं भवति । देवदत्तेन पाचयतीत्यादौ तु न ।

---

खादयतीत्यत्र तु निगरणेत्यादिना (७२६१सू०) परस्मैपदनियमात् उभयथापि परस्मैपदमिति विवेकः ।

(४७) अहिंसार्थस्य अहिंसाकृतस्य हिंसाप्रयोजनकभिन्नस्येत्यर्थः परकीयद्रव्यादिभक्षणे हि परोऽपि हिंसितो भवतीति तत्स्वामिन एवात्र हिंसा प्राप्ता एवञ्च भक्षेर्भक्षणविशेषार्थकतया प्राप्तौ निषेध इति द्रष्टव्यम् प्रत्युदाहरणेनैतद्दर्शयति भक्षयति बलीवर्दान् सस्यमिति ।

(४८) पुत्रो धर्मं जल्पति कथयति देवदत्तो जल्पयति धर्मं तं पुत्रमित्यर्थः ।

(४९) धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेत्युक्तेः ।
शब्दायतेर्धात्वर्थसंगृहीतकर्मकतयाऽकर्मकत्वेन प्राप्तौ निषेधः ।

(५०) न त्वविवक्षितेति अविवक्षा द्वेधा तदन्वयबोधाभावविवक्षणात् सत्त्वे च तद्विवक्षैव तत्र सम्भवितत्वेनाप्यविवक्षणादित्यवधेयम् । पाचयतीत्यादौ अविवक्षितकर्मकत्वेनाकर्मकत्वेऽपि नाकर्मकेण कर्तुः कर्मता ।

(५१) तेनेति मासमासयतीत्यादौ यथा कर्मत्वं तथोक्तं प्राक् (२५१४०) ।

### हृक्रोरन्यतरस्याम्(५२) । १ । ४ । ५३ ।

हृक्रोरणौ यः कर्त्ता स णौ वा कर्मसंज्ञः स्यात् । हारयति कारयति वा भृत्यं भृत्येन वा कटम् । अभिवादि(५३)दृशो-रात्मनेपदे वेति वाच्यम् * । अभिवादयते दर्शयते देवं भक्तं भक्तेन वा ।

### अधिशीङ्स्थासां कर्म । १ । ४ । ४६ ।

अधिपूर्व्वाणामेषामाधारः कर्म स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ।

### अभिनि (५४) विशश्च । १ । ४ । ४७ ।

अभिनीत्येतत्सङ्घातपूर्व्वस्य विशतेराधारः कर्म स्यात् । अभि-निविशते सन्मार्गम् । परिक्रयणे सम्प्रदानमिति(२७८४०)सूत्रा

---

(५२) हृक्रोरिति अभ्यवपूर्व्वस्य हरतेर्भक्षणार्थतया विकारार्थकरोतेश्चाक-र्मकतया च प्राप्तेऽप्राप्ते चाप्राप्ते उभयत्र विभाषेयं तथा चोक्तार्थे प्राप्तं नित्यविधानं निषिध्य पर्य्यायार्थकतन्त्रादियोगे विकल्पविधानम् एतच्च न वेति विभाषेति सूत्रे भाष्यकारेण दर्शितं तेन सूत्रकृताऽभ्य-वहारार्थकस्योदाहरणानुक्तावपि न क्षतिः. तथा च अभ्यवहारयति सैन्धवैः सैन्धवान् वा तथा सैन्धवैः सैन्धवान् वा विकारयतीति ।

(५३) अभिवादयतेर्दृशेरप्राप्तौ इत्येव प्राप्तौ आत्मनेपदविषये विकल्पः ।

(५४) नेरल्पाच्तरत्वेन पूर्वनिपाते कर्त्तव्ये विपरीतोच्चारणं विशिष्टसङ्घात-परिग्रहार्थं तेन प्रत्येकं विपर्य्ययेण वा योगे न । अतएव निविशते यदि शूकशिखा पदे इत्यादि । अधिशीङ्स्थासामित्यतः आधार इत्यनुवर्त्तते ।

दिह मण्डूकप्लुत्याऽन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थित (५५) विभाषाश्रयणात् क्वचिन्न । पापेऽभिनिवेशः ।

## उपान्वध्याङ्वसः । १ । ४ । ४८ ।

उपादिपूर्व्वस्य वसते(५६)राधारः कर्म स्यात् । उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः । अभुक्त्यर्थस्य (५७) न * । वने उपवसति । उभ (५८) सर्व्वतसोः

---

(५५) व्यवस्थितेति समर्थसूत्रभाष्ये अर्थेष्वऽभिनिविष्टानामिति भाष्यप्रयोग एव व्यवस्थाकल्पने मानमिति भावः । अन्ये तु एतद्भाष्यप्रयोगादभिनिवि-शेरानुपूर्व्या यत्र अवर्णं तत्रैवैतत्सूत्रप्रवृत्तिः । अभिनिवेशव्याप्यकत्व-ज्ञित्वार्थकत्वे तु न स्यात् यथा या या संज्ञा तत्र यत्राभिनिविशत इत्यादौ तदानुपूर्व्या अवर्णेऽपि न कर्मत्वम् । अभिनिविशते सन्मा-र्गमित्यादौ सन्मार्गविषयक आग्रह इत्यर्थ इति प्राहुः ।

(५६) लुग्विकरणादलुग्विकरणं बलीय इति न्यायेन वस निवासे इति भौवादिक एवात्र गृह्यते न तु वस आच्छादने इत्यादादिकस्य शप्लुग्विकरणस्य लुप्त्वादित्वाशयेन तिपा निर्दिशति वसतेरिति ।

(५७) वसेरभुक्त्यर्थस्य प्रतिषेध इति वार्त्तिकमर्थतो व्याचष्टे अभुक्त्यर्थस्येति । भक्षणार्थो भूम इत्यादिवत् अर्थद्वयोनिवृत्तिपरतया च अभिर्भोजनम-निवर्त्तनीयोऽर्थो यस्येति वाक्ये एकार्थवत्त्वयोगेन भोजननिवृत्तिरूपार्थ-कस्य नेति वार्त्तिकार्थ इति भावः । गत्यर्थाकर्मकेत्यादिसूत्रवृत्तौ (उ०२११)हरिदिनमुपोषित इत्युदाहरिष्यमाणस्य तु वसेः स्थितिरे-वार्थो भोजननिवृत्तिस्तु आर्थिकीति बोध्यम् । अयोध्या रजनीमेका-मित्यादौ कालाध्वनोरत्यन्तसंयोगे इति (२।३।५) द्वितीयेति ध्येयम् ।

(५८) एवं कारकद्वितीयां निरूप्य तत्प्रसङ्गादुपपदविभक्तिमाह उभेत्यादि । उपपदविभक्तीनां संज्ञोऽर्थः विविच्य तत्तदर्थार्थाः सप्रपञ्च

कार्य्या धिगु (५९) पर्य्यादिषु त्रिषु। (द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते) १। उभयतः कृष्णङ्गोपाः। सर्व्वतः कृष्णम्। धिक् कृष्णाभक्तम्। उपर्य्युपरि लोकं हरिः। अध्यधि लोकम्। अधोऽधो (६०) लोकम्। अभितः परितः समयानिकषाहाप्रतियोगेऽपि। अभितः कृष्णम्। परितः कृष्णम्। ग्रामं समया निकषा वा। हा कृष्णाभक्तम् तस्य शोच्यत इत्यर्थः। बुभुक्षितन्न प्रति भाति किञ्चित्।

## अन्तराऽन्तरेण युक्ते। २। ३। ४।

आभ्यां योगे (६१) द्वितीया स्यात्। अन्तरा त्वां मां हरिः। अन्तरेण हरिन्न सुखम्।

---

त्वेन तत्समानार्थकत्वौचित्याच्च। उभयशब्दनिष्ठं प्रकृतित्वमुभयशब्दे आरोप्य तदभिहितम् उभयशब्दस्यानुकरणत्वेनात्र नायजिति द्रष्टव्यम्। वस्तुतः उभयशब्दात् तसिलि इति समासे उभयशब्दादयज्विधानादयजिति बोध्यम्।

(५९) धिगिति अनुकरणत्वात् सुपो न लुक्। परे तु धिगित्येव पठन्ति तत्र विभक्त्यभावश्चिन्त्यः। धिक्शब्दो निन्दार्थकः।

(६०) उपर्य्यादिशब्दानां सामीप्ये एव उपर्य्यध्यधसः सामीप्ये (७१६४०) इति द्वित्वविधानात् तदर्थे एव द्योत्ये द्वितीया तेन उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धय इत्यादौ न द्वितीयेति बोध्यम्। अभितः परित इत्यत्र पर्य्यभिभ्याञ्चेति(६८।४०)तसिल् तसाद्यन्तोभयतःशब्दयोरिव सर्वत इत्यर्थः।

(६१) अवधित्वरूपः सम्बन्धः मध्यत्वाश्रयी मध्यार्थकान्तराशब्दयोगे द्वितीयार्थः तथैव सम्बन्धत्वेन बोधे षष्ठीप्रसक्तेन तद्बाधिकतया द्वितीयाया अनेन विधानेन तत्समानार्थकत्वौचित्यात् कृष्णादिपदात् न द्वि-

**कर्मप्रवचनीयाः(६२) । १ । ४ । ८३ ।**

इत्यधिकृत्य ।

**अनुर्लक्षणे । १ । ४ । ८४ ।**

लक्षणे (६३) द्योत्येऽनुरुक्तसंज्ञः स्यात् । गत्युपसर्गसंज्ञा(२०१०)पवादः (६४) ।

**कर्मप्रवचनीययुक्ते द्वितीया । २ । ३ । ८ ।**

एतेन योगे द्वितीया स्यात् । जपमनु प्रावर्षत् । हेतुभूतजपोपलक्षितं(६५) वर्षणमित्यर्थः । परापि(६६)हेतौ तृतीया-

तीया उपपदविभक्तेः कारकविभक्तिर्गरीयस्त्वात् तत्राध्याहृतक्रियापेक्षितया प्रथमाया एव प्राप्तिरिति द्रष्टव्यम् ।

(६२) कर्म क्रियां प्रोक्तवन्त इति कर्मप्रवचनीयाः कर्त्तरि भूते चानीयर्-प्रत्ययः तेन सम्प्रति क्रियां न वदन्ति नापि द्योतयन्ति किन्तु क्रियानिरूपितसम्बन्धविशेषं द्योतयन्ति यथोक्तं हरिणा ।

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदक इति ।

अधिपरी अनर्थकावित्यादेः (२६५ पृ०) तदभावेऽपि योग्यतया तथात्वम्

(६३) लक्षणे इति तत्सम्बन्धे लक्ष्यलक्षणभावेऽनुना द्योत्ये इत्यर्थः ।

(६४) अपवाद इति तद्द्योत्यसम्बन्धस्य क्रियान्वयाद्भवितव्यप्राप्तावस्यापवादः तेन गतिर्गताविति(८ ।१ ।७०सू०) अनेनाभीर्न निघात इति बोध्यम्

(६५) अनुद्योत्यं लक्षणलक्ष्यभावसम्बन्धं अपवादेन हि हेतु-विशेषविशिष्टा इत्युच्यते तेन जपाभिन्नहेतुभावसम्बन्धानविच्छी वर्षणमिति बोध इत्याह हेतुभूतेत्यादि ।

(६६) कर्मप्रवचनीयसंज्ञाविधायको हेत्वादिविवक्षायां, अविवक्षायां तु तृतीया-

ऽनेन बाध्यते लक्षणेत्थंभूतेत्यादिना (२६१पृ०) सिद्धे पुनःसंज्ञा-(६७) विधानसामर्थ्यात् ।

### तृतीयार्थे (६८) । १ । ४ । ८५ ।

अस्मिन् द्योत्येऽनुरुक्तसंज्ञः स्यात् । नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थः । षिञ् बन्धने क्तः ।

### हीने । १ । ४ । ८६ ।

हीने द्योत्येऽनुःप्राग्वत् । अनु (६९) हरिं सुराः हरेर्हीना इत्यर्थः ।

### उपोऽधिके च । १ । ४ । ८७ ।

अधिके हीने च द्योत्ये उपेत्यव्ययम्प्राक्संज्ञः स्यात् । अधिके सप्तमी (७०) वक्ष्यति । हीने उप हरिं सुराः ।

---

तथाच लक्षणयोर्द्विप्रयुक्तिर्विषयसमावेशेन प्रकृते हेतुत्वविवक्षया परत्वा एव तृतीयायाः प्राप्तिःस्यादित्यत आह परापीति ।

(६७) पुनःसंज्ञेति पुनःसंज्ञाकरणबोधितद्वितीयाविधानसामर्थ्यादित्यर्थः अन्यथा तद्विधानं व्यर्थं स्यादिति भावः ।

(६८) तृतीयार्थे इत्यत्र तृतीयाशब्देन तृतीयाविभक्तिं सहयुक्ते (२७२पृ०) इत्यादिनोक्तानीत्यनन्तरत्वात् सहार्थो लक्ष्यते तदर्थे वाच्ये द्योत्ये इत्यर्थः वाच्यिकत्वेऽनुः कर्मप्रवचनीयो द्वितीयार्थसहायश्च भवतीति ।

(६९) हीने इति लक्षणादिभावात् उपपदादेव द्वितीया नतुपञ्च-म्यादिस्तत्राह हीनो हरेरिति अनुहरिमिति ।

(७०) सप्तमीति यस्मादधिक (२११पृ०) इत्यनेनेति शेषः ।

## लक्षणेत्थम्भूताख्यानभाग (७१) वीप्सासु प्रतिपर्यनवः ।१।४।९०।

एष्वर्थेषु विषयभूतेषु (७२) प्रत्यादय उक्तसंज्ञाः स्युः । लक्षणे । वृक्षम्प्रति (७३) परि, अनु वा विद्योतते विद्युत् । इत्थम्भूताख्याने भक्तो विष्णुम्प्रति परि, अनु वा । भागे लक्ष्मीर्हरिम्प्रति परि, अनु वा हरेर्भाग इत्यर्थः । वीप्सायाम् वृक्षं वृक्षं प्रति (७४) परि, अनु वा सिञ्चति । अत्रोपसर्गत्वाभावान्न षत्वम् । एषु किम् परिषिञ्चति ।

## अभिरभागे ।१।४।९१।

भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभिवर्तते । भक्तो हरिमभि । देवन्देवमभिसिञ्चति । अभागे किम् । यदत्र ममाभिष्यात्तद्दीयताम् ।

## अधिपरी अनर्थकौ ।१।४।९३।

---

(७१) इत्थं भूतः कञ्चित्प्रकारं प्राप्तः स आख्यायतेऽनेनेति इत्थम्भूताख्यानं प्रकारविशेषविशिष्टकथनं, भागशब्देन च अंशः स्वाम्यंशेन तत्स्वामी उच्यते

(७२) वीप्सायां द्विर्वचनेनोक्तत्वादाह विषयभूतेष्विति तथा च वीप्साया द्विर्वचनेनोक्तेऽपि प्रत्यादीनां तत्र द्योतकतेति भावः ।

(७३) वृक्षमिति वृक्षप्रकाशेन विद्युद्विद्योतस्यावगमाद्वृक्षो लक्षणम् ।

(७४) वृक्षं वृक्षमित्यादौ द्विर्वचनात् वृक्षाणां [illegible] प्रत्यादिभिर्निर्दिश्यते तथा च तेषां कर्मप्रवचनीयत्वमिति भावः । वृक्षादीनां सेचनकर्मत्वेऽपि तस्याविवक्षितत्वात् कर्मप्रवचनीययोगेन द्वितीया ।

उक्तसंज्ञौ स्तः । कुतोऽभ्यागच्छति । कुतः पर्य्यागच्छति । गतिसंज्ञाबाधाद् (७५) गतिर्गताविति (८।१।७०सू०) निघातो न ।

सुः पूजायाम् । १ । ४ । ९४ ।

सु सिक्तम् । सु स्तुतम् । अनुपसर्गत्वान्न षः । पूजायां किम् । सुषिक्तं किन्तवात्र । आक्षेपोऽयम् ।

अतिरतिक्रमणे च । १ । ४ । ९५ ।

अतिक्रमणे (७६) पूजायाञ्चातिः कर्मप्रवचनीयसंज्ञः स्यात् । अति देवान् कृष्णः ।

अपिः (७७) पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु । १ । ४ । ९६ ।

एषु द्योत्येष्वपिरुक्तसंज्ञः स्यात् । सर्पिषोऽपि स्यात् । अनुपसर्गत्वान्न षः सम्भावनायां (७८) लिङ् तस्या एव विष-

---

(७५) गतिसंज्ञाबाधादिति धात्वर्थमात्रद्योतकत्वेन क्रियायोगात् गतित्वेऽपि विशिष्य द्योतकत्वाभावात् अनर्थकत्वव्यवहार इति भावः ।

(७६) अतिक्रमणमनुचिताधिकानुष्ठानम् । चकारात् पूर्वसूत्रस्थं पूजायामित्यनुकृष्यते अति देवानित्यस्य देवेभ्योऽधिको देवपूज्यो वा कृष्ण इत्यर्थः ।

(७७) अपिरिति । पदस्याप्रयुज्यमानस्य पदान्तरस्यार्थः पदार्थः सर्पिषोऽपीत्यादौ बिन्दुरित्यादिरप्रयुज्यमानपदस्यार्थोऽपिना द्योत्यत इति बोध्यम् ।

(७८) सम्भावना उत्कटकोटिका शङ्का कर्मप्रवचनीयत्वेन तद्द्योतकत्व-भावाच्च तस्या एवेति सम्भावनाया एवेत्यर्थः कर्तृदौर्लभ्येति प्रकृताभिप्रायं सर्पिषोऽपि पिबेत्यादौ कर्मदौर्लभ्यस्यापि संप्रत्ययात् ।

यभूते भवने कर्त्तृदौर्लभ्यप्रयुक्तान्दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन सम्बध्यते सर्पिष इति षष्ठी तु अपिशब्दबलेन गम्यमानस्य विन्दोरवयवावयविभावसम्बन्धे। इयमेव ह्यपि शब्दस्य पदार्थद्योतकता नाम। द्वितीया तु नेह प्रवर्त्तते सर्पिषो विन्दुना योगो न त्वपिना (७९) त्युक्तत्वात्। अपि स्तुयाद्विष्णुम् (८०) सम्भावनं शक्त्युत्कर्षमाविष्कर्त्तुमत्युक्तिः। अपि स्तुहि। अन्ववसर्गः कामचारानुज्ञा (८१)। धिग्देवदत्तमपि स्तुयाद्वृषलम् (८२) गर्हा। अपि सिञ्च अपि (८३) स्तुहि समुच्चयः।

---

विन्दोर्दौर्लभ्यप्रयुक्तदौर्लभ्यसम्बन्धस्य द्योतकोऽपिः। एवञ्च सर्पिरवयवविन्दुदौर्लभ्यप्रयुक्ता तत्कर्त्तृका सम्भावनाविषयः सत्तेति बोधः।

(७९) न त्वपिनेति विन्दुना योगेऽपि अपिद्योत्यसम्बन्धेनान्वय एवेति न द्वितीया। कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमेव तद्युक्तत्वं प्रकृते च अपि द्योत्यसम्बन्धस्य विन्दुः प्रतियोगी न सर्पिरिति भावः। यदा तु स्पष्टप्रतिपत्तयेऽपि द्योत्यस्यापि विन्दोः प्रयोगस्तदापि उपपदविभक्तेः कारकविभक्तिर्गरीयसीत्युक्तेर्द्वितीयां बाधित्वैव स्यादिति क्रियाकर्त्तृत्वेन प्रथमैवेति दिक्।

(८०) अपि स्तुयादिति सम्भावनगोचरं विष्णुमपीत्यनेन शक्त्युत्कर्षाविष्करणार्थां अत्युक्तिरसम्भाव्यार्थसम्भावनं सम्भावनापदार्थत्वं व्याख्यानमेव शरणमिति द्रष्टव्यम्। अयमभिप्रायो अपि विष्णुस्तुतेः सम्भवत्वसम्भावनेऽन्यस्तुतेर्निश्चयेन कर्त्तुं शक्यत्वाद्योतनात् शक्त्युत्कर्षः।

(८१) कामचारः यथेच्छं स्तुहि मा यथेष्टं कुर्विति भावः।

(८२) क्रियागतगर्हात्वमपि द्योत्यम् तदेव धिगित्यादिनाऽनूद्यते।

(८३) अपिशब्देन सिञ्चेन समुच्चयद्योतनात् प्रकृतं संज्ञायाश्चभवत्वापि सम्भाव इति बोध्यम्।

**कालाध्वनोरत्यन्तसंयोगे(८४)। २। ३। ५।**

इह द्वितीया स्यात्। मासङ्कल्याणी। मासमधीते। मासं गुडधानाः। क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः। अत्यन्तसंयोगे किम्। मासस्य द्विरधीते क्रोश-स्यैकदेशे पर्व्वतः।

। द्वितीया (८५)।

**स्वतन्त्रः (८६) कर्त्ता। १। ४। ५४।**

---

(८४) अत्यन्तसंयोगो निरन्तरसम्बन्धस्तेन गुणक्रियाभ्यामभावेन च तादृश-सम्बन्धवत्त्वेन कालं क्रोशं तद्व्याप्तो वेत्यादिप्रयोगः सङ्गच्छते। तथा च गुणादिभिः कालाध्वनोरत्यन्तसम्बन्धे प्रत्याय्यमाने कालाध्व-वाचकाभ्यां द्वितीयेत्यर्थः। मासमधीते इत्यादौ तु द्विरुक्त्या यावदवयवसम्ब-न्धरूपा व्याप्तिर्द्वितीयार्थः।

(८५) अत इदं बोध्यम्। फलभागित्वेनैव कर्मणः कर्मव्यपदेशभागितया फलस्यापि व्यपदेशिवद्भावपरिभाषया कर्मत्वस्वीकारात् फलस्य च धातूपस्थाप्यतया प्रातिपदिकत्वाभावेन तत्र द्वितीयादिविभक्तेरभावेऽपि तद्विशेषणीभूतप्रातिपदिकघटकात् द्वितीया तेन स्तोकं पचतीत्यादि-सिद्धिरतएव धात्वर्थविच्छित्तिफलरूपक्रियाया विशेषणस्य स्तोकादेः क्रियाविशेषणत्वमिति व्यवहारः। इति द्वितीया।

(८६) स्वतन्त्र इति धात्वादिप्रत्ययसमभिव्याहृतधातूपात्तप्रधानीभूतव्या-पाराश्रयत्वमितरव्यापारानधीनव्यापारवत्त्वम् वा स्वातन्त्र्यं बोध्यम् कर्मबोधकप्रत्ययसमभिव्याहारे कर्त्तृत्वेन प्रधानतया बोध तिङादि-स्वीकर्त्तृमते कर्मादिव्यापारस्यैव धात्वादिसमभिव्याहृतेति। णिज-न्तस्य प्रयोज्यस्य स्वातन्त्र्यपारवश्य प्रधानव्यापारेति। हरिणा तु

क्रियायां स्वातन्त्र्येण विवक्षितो (८७) ऽर्थः कर्त्ता स्यात् ।

**साधकतमं करणम् ।१।४।४२।**

क्रियासिद्धौ प्रकृष्टोपकारकं (८८) करणसंज्ञं स्यात् । तमब्ग्रहणं किम् । गङ्गायां घोषः ।

---

स्वातन्त्र्ये विशेषो दर्शितो यथा ।
धातूपात्तक्रिये नित्यं कारके कर्तृतेष्यते इति सामान्यतोऽभिधाय ।
प्राधान्यतः शक्तिलाभात् प्रागभावापादनादपि ।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्त्तनात् ।
अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात् ।
आरादप्युपकारत्वात् स्वातन्त्र्यं कर्त्तुरिष्यत इति ।
अस्यायमर्थः इतरव्यापारात् प्रागपि प्राधान्येनात्मशक्तेः कर्तृव्यापारस्य सत्त्वात् तथाच इतरव्यापारानधीनव्यापारवत्त्वादित्यर्थः इतरकारकाणाञ्च व्यापारप्रवृत्तिनिवृत्त्योश्च कर्त्तुरेव प्रयोजकत्वात् दात्रादेः कुठारादिवत् कर्त्तुः प्रतिनिध्यसम्भवात् कारकान्तराप्रयोगेऽपि कर्त्तुः प्रयोगात् आरात् साक्षाद्धातूपात्तफलजनकव्यापारवत्त्वाच्च स्वातन्त्र्यं कर्त्तुरिति ।

(८७) विवक्षित इति कर्मकरणादेरपि तत्तद्व्यापारस्य धातुनाभिधाने कर्तृत्वमिति द्योतनाय ।

निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके ।
व्यापारभेदापेक्षायां करणत्वादिसम्भव इति ।

हरिणा विवक्षावशात् सर्वेषां कर्तृत्वस्य स्वीकारात् भाष्यकृता तु पर्यायेण करणाधिकरणकर्मणामेव कर्तृत्वं निदर्शितमपादानादीनां कर्तृत्वानिदर्शनादेवज्ञानात् करणाधिकरणकर्मणामेव विवक्षया कर्तृत्वमिति विवेकः ।

(८८) प्रकृष्टत्वञ्च व्यापाराव्यवधानेन फलोत्पादकत्वं ज्ञेयं हरिणा

**कर्तृकरणयोस्तृतीया(८९) ।२।३।१८।**

अनभिहिते कर्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली । प्रकृत्यादिभ्य(९०)उपसंख्यानम् * । प्रकृत्या(९१)

---

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतमिति ।

विवक्ष्यते इत्यनेन विवक्षया अन्यस्यापि तथात्वं भवतीति सूचितं तदप्युक्तं तत्रैव

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येष प्रयोगो दृश्यते यत इति ।

प्रत्युदाहरणं तु गङ्गाया आधारत्वस्य विवक्षायामेव तस्य च कर्तृ-कर्मव्यवहितक्रियाधारत्वेन व्यवधानेन फलोत्पादकत्वात् न साधक-तमत्वमिति भावः । आधारस्य यथा कर्तृकर्मद्वारा क्रियाधारत्वं तथाऽग्रे (१०७पृ०) वक्ष्यते ।

(८९) कर्तृकरणयोरिति तृतीयायाः अर्थः कर्तृत्वकरणत्वशक्तिमान् अन्य-जनकभावः सम्बन्ध इति बोध्यम् करणशक्तिमत्त्वस्य व्यापारवत्त्वमेव तेन हेतौ न प्रसङ्गः ।

अनाश्रिते तु व्यापारे कारणं हेतुरिष्यते ।
द्रव्यादिविषयो हेतुः करणं चरितक्रियमिति ।

हरिणा हेतोर्व्यापारानाश्रयत्वोक्त्या व्यापाराश्रयस्यैव करणतोक्तेति द्रष्टव्यम् । उदाहरणे तु रामकर्तृकबाणकरणकप्राणवियोजनफ-लाश्रयो वालीति बोधः ।

(९०) प्रकृत्यादिभ्य इति इदम् अप्रयोगं सर्वविभक्त्यपवादः आकृतिग-णोऽयं तेन नाम्ना सुतीक्ष्णचरितेन दान्त इत्यादि सिद्धम् ।

(९१) प्रकृत्येति चारुरभिरूपः क्रियाया आश्रयत्वेन कर्तृकरणत्वाभावात् सर्वोऽपि प्राज्ञो यदुपकारेण समाधानं करोति स्थितिकरणत्वात् तृतीया तथाच

णकः । प्रायेण (९२) याज्ञिकः । गोत्रेण (९३) गार्ग्यः । समेनैति (९४) विषमेणैति । द्विद्रोणेन (९५) धान्यं क्रीणाति । सुखेन दुःखेन यातीत्यादि ।

## दिवः कर्म च । १ । ४ । ४३ ।

दिवः (९६) साधकतमं कर्मसंज्ञं स्यात् चात् करणसंज्ञम् । अक्षैरक्षान् वा दीव्यति ।

---

कृतौ करणान्तरस्य दासाय प्रकृत्यादेरेव करणत्वम् विवक्षितं तेन स्वभावेनायमभिरूपः कृतः न त्वलङ्कारादिनेति प्रकृतवाक्यार्थः ।

(९२) प्रायेणेति गम्यमानस्नानक्रियां प्रति करणत्वम् आचारादिबाहुल्येन याज्ञिकोऽयं स्यात इत्यर्थः ।

(९३) गोत्रेणेति गार्ग्योऽस्य गोत्रमित्यर्थः प्रथमायां प्राप्तायां गोत्रेण गार्ग्यो ज्ञायते इत्यर्थः ।

(९४) समेनैतीति समसेतीत्याद्यर्थे समविषमाभ्यां द्वितीया प्राप्ता तयोश्चात्र गमने करणत्वाभ्युपगमेन तृतीयेति बोध्यम् ।

(९५) द्विद्रोणेनेति द्वयोर्द्रोणयोः समाहारः द्विद्रोणं पात्रादित्वान् स्त्रीत्वाभावः द्रोणद्वयसम्मितं धान्यमित्यर्थः अत्र षष्ठी प्राप्ता द्विद्रोणपरिमितधान्यार्थे मूल्ये द्विद्रोणस्य क्रियां प्रति करणत्वमिति तृतीया ।

(९६) दिव इति उभयसंज्ञयोः समावेशः । तेन दिवः साधकतमस्य शक्तिद्वययोगो बोध्यतेऽतः अक्षैर्देवयत इत्यादौ तृतीयापरत्वेऽपि सकर्मकत्वात् अकर्मकप्रयुक्तपरस्मैपदाभावः तृतीययैव शक्तिद्वयबोधनेन अकर्मकत्वाभावात् । यदाऽक्षाणां कर्मत्वविवक्षा तदाऽक्षान् दीव्यतीत्यादि साधु शब्दशक्तिस्वभावेनैव अक्षाणां देवितेत्यादौ तृतीयातः परत्वात् कर्मणि षष्ठी । अक्षाद्देवीत्यादौ अक्षः करणत्वेऽपि तृतीयैव कर्मत्वबोधनात् कर्मत्वमपि अनुपपन्नभावः । अक्षादेव इत्यादौ

अपवर्गे तृतीया । २ । ३ । ६ ।

अपवर्गः फलप्राप्तिः (९७) तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वाऽनुवाकोऽधीतः । फलप्राप्तिः किम् । मासमधीतो नायातः (९८) ।

सहयुक्तेऽप्रधाने । २ । ३ । १९ ।

सहार्थेन (९९) युक्तेऽप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता (१००) । एवं साकं सार्धं समं योगेऽपि । विनापि (१०१) तद्योगं तृतीया वृद्धो यूनेत्यादि (४४४पृ०) दर्शनात् ।

---

षेतु तृतीया तेन पञ्चाध्यजन्तदेवमन्त्रेन समास इति विवेकः । यत्नि-द्वयस्वीकारेऽपि सकारादिना एकस्मिन्नपि उक्तेऽत्र प्रथमैव न तु तृतीयेति बोध्यम् ।

(९७) फलप्राप्तिरिति तस्यां सत्यां प्रयोजनाभावादेव न क्रियाप्रवृत्तिरिति फलप्राप्तिशब्देन तत्पूर्वकस्त्याग उच्यते त्यागस्य च फलप्राप्तिर्व्यञ्जिकेति फलप्राप्तिरेवार्थसम्बन्धादपवर्गशब्दवाच्या ।

(९८) नायात इत्यनेन फलप्राप्तिरेवापवर्गवाच्येति स्फुटमुक्तम् ।

(९९) पृथग्विनानानाभिः (२९७पृ०) इतिवत् सहेनैव सिद्धे युक्तपदं शब्दविशेषं विनापि तदर्थयोगे भवतीत्येतदर्थमित्याह सहार्थेनेति ।

(१००) सहार्थः साहित्यं तच्च समभिव्याहृतक्रियादिसमानकालताख्य-क्रियादिसत्त्वं कश्चित्तु वस्तुतः क्रियासत्त्वं तेन भावचनकाले एक-स्मिन् चैत्रे तिलपाते तिलैः सह माषान् वपतीति प्रयोगः । पित्र-[illegible] गमनाद्यन्वयी: पुत्रस्य तृतीयायोग्य इत्य-प्रधानत्वम् तत्र तृतीया यथा वाच्यप्रधानता तथा शब्दार्थरत्ने ऽस्माभिः प्रपञ्चितम् ।

(१०१) क्वचिच्छब्दयोगं विनापि भवतीत्याह विनापीति ।

### येनाङ्गविकारः । २ । ३ । २० ।

येनाङ्गेन(१०२) विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् । अक्ष्णा (१०३) काणः । अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः । अङ्गविकारः किम् अक्षि काणमस्य ।

### इत्थम्भूतलक्षणे । २ । ३ । २१ ।

कञ्चित्प्रकारं (१०४)प्राप्तस्य लक्षणे तृतीया स्यात् । जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः ।

### संज्ञोऽन्यतरस्यां कर्मणि । २ । ३ । २२ ।

सम्पूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । पित्रा पितरं वा सञ्जानीते ।

### हेतौ । २ । ३ । २३ ।

---

(१०२) येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयवो गृह्यते सन्निधानात् न चार्थोहिकृत एव न ह्यविकृतेनावयवेन शरीरी विकृतो भवति तदेतदाह येनाङ्गेन विकृतेनेति अङ्गविकार इत्यत्र अङ्गशब्दोऽर्शआद्यजन्ततया अङ्गिपरो व्याख्यानादिति ध्येयम् ।

(१०३) अक्ष्णेति अवयवधर्मस्य अवयविन्यारोपात् तदवच्छिन्ने व्यवहार इति बोध्यम् । वस्तुतोऽपि इत्थम्भावलक्षणत्वं काणत्वम् तद्धीनत्वमक्ष्णत्वमिति विवेकः ।

(१०४) इत्थं भावः प्रकारवाची प्राप्त्यर्थो भुवः कर्मणि क्तः ततः इत्थंभावेन भूतशब्दस्य समासः अथवा भावः कर्तृवाचक कर्मण्यन्तर्भावितण्यर्थ इत्थं भूतशब्देन समास इत्याह कश्चिदिति गम्यमानप्राप्तिकारकत्वलक्षणाश्रितकायामेवैतल्लक्षणेन तृतीयेति बोध्यम् ।

हेत्वर्थे तृतीया स्यात् । द्रव्यादिसाधारणं निर्व्यापार-(१०५) साधारणञ्च हेतुत्वम् । करणत्वन्तु क्रियामात्रविषयं व्यापार-नियतञ्च । दण्डेन घटः (१०६) । पुण्येन दृष्टो हरिः फल-मपीह(१०७)हेतुः । अध्ययनेन वसति । गम्यमानापि(१०८) क्रिया विभक्तौ प्रयोजिका । अलं श्रमेण । श्रमेण साध्य-न्नास्तीत्यर्थः । इह साधनक्रियां प्रति श्रमः करणम् । शतेन-शतेन वत्सान् पाययति पयः । शतेन परिच्छिद्येत्यर्थः । अशिष्टव्यवहारे (१०९) दाणःप्रयोगे चतुर्थ्यर्थे तृतीया * । दास्या(११०)संयच्छते कामुकः । धर्म्मं तु भार्य्यायै संयच्छति ।

। तृतीया ।

---

(१०५) निर्व्यापारेति करणन्तु व्यापारवद्धेतुरुक्तम्(२७०पृ०)एवञ्च करणशक्ति-भिन्नैव हेतुशक्तिस्तृतीयार्थः ।

(१०६) दण्डे व्यापारसत्त्वेऽपि क्रियाजनकत्वाभावान्न करणत्वम् पुण्ये क्रिया-जनकत्वेऽपि निर्व्यापारत्वान्नकरणत्वमिति विवेकः ।

(१०७) फलमपीति स्वेच्छाजनकेच्छाविषयत्वेन फलस्य हेतुत्वम् ।

(१०८) गम्यमानापीति अध्याहृतपदजन्यबोधविषयोऽपि न तु वाच्यमात्र तद्-वाचकपदजन्यबोधविषय एवेति भावः ।

(१०९) अशिष्टानां यज्ञीयानां यो व्यवहारः क्रिया तद्बोधकदाणःप्रयोगे प्रत्या-सत्त्या चतुर्थ्यन्तेन व्यवहारस्य यज्ञीयत्वं तद्बोधकपदात् चतुर्थ्यर्थे तृतीयेत्यर्थः ।

(११०) दास्येति दासी सम्प्रदानकं रतिफलकं दानमिति बोधः ।

## कर्मणा यमभिप्रैति स सम्प्रदानम्। १।४।३२।

नस्य कर्मणा यमभिप्रैति (१११) स सम्प्रदानसंज्ञः स्यात्।

## चतुर्थी (११२) सम्प्रदाने। २। ३। १३।

प्राय गान्ददाति। अनभिहित इत्येव। दानीयो विप्रः।

ययो(११३)यमभिप्रैति सोऽपि सम्प्रदानम्। पत्ये शेते।

---

१) कर्त्ता दानक्रियाकर्मणा यमभिप्रैति तत्कर्मसम्बन्धेन इच्छति अयं गवादिमान् भवत्विति इच्छतीति यावत् तत्कारकं सम्प्रदानसंज्ञं स्यादित्यर्थः। दानञ्चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादानं पुनर्ग्रहणे तु रजकस्य वस्त्रं ददातीत्येव स्यात् ददात्यर्थस्य गौणत्वेऽपि सम्प्रदानं भवत्येव खण्डिकोपाध्यायः शिष्याय चपेटं ददातीति भाष्यप्रयोगात्। सम्प्रदानञ्च त्रिविधम्

अनिराकरणात् कर्त्तुस्त्यागाङ्गकर्मणेप्सितम्।
प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानतामिति।

हरिणा अनिराकरणप्रेरणानुमतिरूपविभाजकहेतुत्रयस्य निर्देशेन भेदत्रयस्य प्रतिपादनात्। तत्रानिराकर्तृ सम्प्रदानं देवाय वस्त्रं ददातीत्यादौ देवादि तस्य कर्त्तुः प्रदत्तस्वप्रतिबन्धानिराकरणात्। प्रेरकं सम्प्रदानं द्वितीयं याचकाय धनं ददातीत्यादौ याचकादि देहीत्याद्यभिलापादिना कर्त्तुः प्रेरणात्। अनुमन्तृसम्प्रदानं तृतीयं गुरवे गां ददातीत्यादौ गुर्वादितस्य प्रार्थनाव्यतिरेकेणापि अनुमतिमात्रेण प्रेरणादिति विवेकः।

२) तादर्थ्यचतुर्थ्यैव सिद्धे चतुर्थी सूत्रं रुच्यर्थानामित्यादि (२७६पृ०) सूत्राविषये चतुर्थ्यर्थम्। वस्तुतस्तादर्थ्याविवक्षायामपि चतुर्थ्यर्थम्।

३) कृत्रिमाकृत्रिमयोर्मध्ये कृत्रिमे कार्य्यसम्प्रत्यय इति न्यायेन कर्मणेति कर्मपदस्य पारिभाषिककर्मसंज्ञापरत्वं न तु क्रियापरत्वमित्या

यजेः कर्म्मणः करणसंज्ञा सम्प्रदानस्य च कर्म्मसंज्ञा *। पशुना (११४) रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः।

**रुच्यर्थानां प्रीयमाणः। १। ४। ३३।**

रुच्यर्थानां (११५) धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात्। हरये रोचते भक्तिः। अन्यकर्त्तृकोऽभिलाषो रुचिः। हरिनिष्ठप्रीतेर्भक्तिः कर्त्री। प्रीयमाणः किम्, देवदत्ताय रोचते मोदकः पथि।

---

यवेन क्रियया आदिशक्तिकारकः क्रिययाभिप्रेयमाणं सम्प्रदानसंज्ञं स्यात् स्वक्रिया यत्क्रियोद्देशिका तत् सम्प्रदानमिति फलितार्थः भवति च पत्ये शेते इत्यादौ पत्नीशयनं पतिशयनफलकमिति पत्युः सम्प्रदानता अत्र क्रियाऽकर्म्मिकैवेति सम्प्रदायविदः। तत्सत्रूमिपतिः पत्न्यै दर्शयन् प्रियदर्शन इत्यादौ तु नानेन सम्प्रदानता किन्तु क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः (२८५०) इत्यनेन तत्र चतुर्थी तेन दर्शयतेरित्यस्य सकर्म्मकत्वेऽपि न क्षतिरिति बोध्यम्।

(११४) पशुनेति कर्म तृतीयार्थः सम्प्रदानं द्वितीयार्थः। एतच्च दानार्थकयजधातुविषयमिव पूजार्थकस्य तु पशोः करणत्वमेव। इदञ्च छान्दसमिति कैयटः।

(११५) रुचिरर्थो येषां ते रुच्यर्थास्तेषां प्रीयमाणः प्रीणनकर्म्मैव सम्प्रदानसंज्ञं स्यात्। अन्यकर्त्तृक इच्छायमर्थः। प्रीत्यनुकूलसमानाधिकरणव्यापारो रुचेरर्थः समवायेन प्रीत्याश्रयः सम्प्रदानम्। अभिलष्यतेस्तु प्रीतिव्यधिकरणव्यापारबोधकतया न रुच्यर्थत्वमिति न तत्र सम्प्रदान-

* त्वमेवञ्च कर्म्मसंज्ञाप्राप्तौ अनेन तस्य बाधः यथोक्तं हरिणा

हेतुत्वे कर्म्मसंज्ञायां शेषत्वे चापि कारके।

रुच्यर्थादिषु शास्त्रेण सम्प्रदानत्वमुच्यते॥ इति

प्रत्युदाहरणे पथः प्रीत्यधिकरणत्वाभावात् न सम्प्रदानता।

### श्लाघह्नुङ्स्थाशपां (११६) ज्ञीप्स्यमानः ।१। ४ । ३४ ।

एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात्। गोपी स्मरात् कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा। ज्ञीप्स्यमानः किम्, देवदत्ताय श्लाघते पथि।

### धारे (११७) रुत्तमर्णः । १ । ४ । ३५ ।

धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात्। भक्ताय धारयति मोक्षं हरिः। उत्तमर्णः किम्, देवदत्ताय शतं धारयति ग्रामे।

### स्पृहेरीप्सितः । १ । ४ । ३६ ।

स्पृहयतेः (११८)प्रयोगे इष्टः सम्प्रदानं स्यात्। पुष्पेभ्यः स्पृहयति। ईप्सितः किं, पुष्पेभ्यो वने स्पृहयति। ईप्सितमात्रे

---

(११६) बोधविषयगुणवत्त्वप्रतिपादकशब्दप्रयोगः श्लाघतेरर्थः, बोधविषय इतरादर्शनयोग्यदेशस्थापनं ह्नुतेरर्थः, स्वाभिप्रायबोधनानुकूलस्थितिस्तिष्ठतेरर्थः स्वाभिप्रायबोधनानुकूलशपथकरणं शपतेरर्थः कृष्णाय श्लाघते इत्यादौ कृष्णं बोधयितुं गुणवत्त्वेन कीर्तीत्यर्थः एवं सर्वत्र कृष्णं बोधयितुं निह्नवादिकं बोध्यम्।

(११७) धारेरिति। अवस्थितऋणकर्तृकव्यापारो धारेरर्थः स्थितश्चाश्रयश्चासौ सम्प्रदानम्। अधमर्णदेयधनस्वत्ववत्त्वेन देयं धारयति [illegible] अवस्थितस्य सम्प्रदानोद्देश्य उत्तमर्ण इति फलितार्थः अधमर्णदेयत्वेन मोक्षमपि भक्ताय निर्धारयतीति बोध्यम्।

(११८) इच्छायाम् कर्तृ तद्विषयः सम्प्रदानम्।

इयं संज्ञा । प्रकर्षविवक्षायान्तु परत्वात्कर्मसंज्ञा । पुष्पाणि स्पृहयति ।

**क्रुधद्रुहेर्ष्यासूयार्थानां (११९) यम्प्रति कोपः ।**

**१ । ४ । ३७ ।**

क्रुधाद्यर्थानाम्प्रयोगे यम्प्रति कोपः स उक्तसंज्ञः स्यात् । हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति । यम्प्रति कोपः किम्, भार्य्यामीर्ष्यति मैनामन्योऽद्राक्षीदिति । क्रोधोऽमर्षः । द्रोहोऽपकारः । ईर्ष्या अक्षमा । असूया गुणेषु दोषाविष्करणम् । द्रुहादयोऽपि कोपप्रभवा एव गृह्यन्तेऽतो विशेषणं सामान्येन यम्प्रति कोप इति ।

**क्रुधद्रुहोरुपसृष्टयोः कर्म । १ । ४ । ३८ ।**

सोपसर्गयोरनयोर्यम्प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात् । क्रूरमभिक्रुध्यति अभिद्रुह्यति ।

**राधीक्ष्योर्यस्य विप्रश्नः (१२०) । १ । ४ । ३९ ।**

---

(११९) प्रभाव्यस्तद्रूपचित्तवृत्तिविशेषः कोपः प्रकृष्टः कोपः क्रुधेरर्थः । दुःखजनकक्रियाद्यपकारजन्यचित्तवृत्तिविशेषः द्रुहेरर्थः । उत्कर्षनिरोधिकार्यारोपात्तद्रूपचित्तवृत्तिविशेषः ईर्ष्यतेरर्थः । आचारादिगुणविशेषे इष्यमाणतत्त्वाध्यारोपात्तद्रूपचित्तवृत्तिविशेषः असूयतेरर्थः । यात्र-[illegible]भूतकोपस्य वस्तु विषयः स सम्प्रदानमित्यर्थः ।

(१२०) प्रश्नविषयशुभाशुभपर्यालोचनं राधीक्ष्योरर्थस्तादृशशुभाशुभ[illegible] सम्प्रदानसंज्ञः स्यादित्यर्थः ।

एतयोः कारकं सम्प्रदानं स्यात् यदीयो विविधः प्रश्नः क्रियते। कृष्णाय राध्यति ईक्षते वा पृष्टो गर्गः शुभाशुभं पर्य्यालोचयतीत्यर्थः।

**प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता। १।४।४०।**

आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्त्तनारूपव्यापारस्य कर्त्ता(१२१)सम्प्रदानं स्यात्। विप्राय गां प्रतिशृणोति आशृणोति वा विप्रेण मह्यं देहीति प्रवर्त्तितस्तं प्रतिजानीत इत्यर्थः।

**अनुप्रतिगृणश्च। १।४।४१।**

आभ्यां गृणातेः कारकं पूर्वव्यापारस्य (१२२) कर्त्तृभूतमुक्तसंज्ञं स्यात्। होत्रेऽनुगृणाति प्रतिगृणाति वा होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः।

**परिक्रयणे सम्प्रदानमन्यतरस्याम्। १।४।४४।**

नियत(१२३)कालभृत्या स्वीकरणं परिक्रयणं तस्मिन् साधकतमं कारकं सम्प्रदानसंज्ञं वा स्यात्। शतेन शताय (१२४)

---

(१२१) प्रवर्त्तनाजन्याभ्युपगमः प्रतिश्रुत आश्रुतश्चार्थः पूर्वस्य धात्वर्थघटकविषे-यव्यापारस्य प्रवर्त्तनायाः कर्त्ता सम्प्रदानसंज्ञ इत्यर्थः।

(१२२) शंसनविषयकर्त्तृत्वव्यापाररूपप्रोत्साहनं प्रतिगृणातेरनुगृणाते-श्चार्थः पूर्वस्य व्यापारस्य शंसनस्य कर्त्ता सम्प्रदानसंज्ञः स्यादित्यर्थः।

(१२३) सम्प्रदानेनाल्पकालस्वीकारः क्रयः परिच्छिन्नकालस्वीकारस्तु [illegible] अनियत-कालात् क्रयात् नियतकालस्येन तस्य न्यूनता [illegible] भिद्यतेति।

(१२४) शतायेति करणत्वेन सम्प्रदानत्वेन वा बोधः। [illegible] एव मतं हत्वा [illegible]।

वा परिक्रीतः। तादर्थ्ये (१२५) चतुर्थी वाच्या*। मुक्तये हरिं भजति। क्लृपि सम्पद्यमाने (१२६) च*। भक्तिर्ज्ञानाय कल्पते सम्पद्यते जायते वा इत्यादि। उत्पातेन ज्ञापिते च*। वाताय कपिला विद्युत्। हितयोगे च* (१२७) ब्राह्मणाय हितम्।

## क्रियार्थोपपदस्य च कर्मणि स्थानिनः।२।३।१४।

क्रियार्था क्रिया(१२८)उपपदं यस्य तस्य स्थानिनोऽप्रयुज्य-

---

(१२५) तस्मै कार्य्यायेदं तदर्थं तस्य भावस्तादर्थ्यं कृत्तद्धितेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेति सिद्धान्तात् सम्बन्ध एव तादर्थ्यं स चोपकार्य्योपकारकभाव एव यदा तु तादर्थ्यस्य सम्बन्धत्वेन भानं तदा षष्ठी। सम्बन्धस्य द्विष्ठत्वेऽपि षष्ठीव विशेषणपदादेव चतुर्थी बोध्या न तु विशेष्यात् तस्य कर्त्तृकारकादिसंज्ञया बाध्यत्वात्।

(१२६) क्लृपीति क्लृपेर्भावे क्विप् सम्पद्यतेरभूतस्य प्रादुर्भावोऽर्थः क्लृप्यर्थकधातुयोगे यः सम्पद्यते तत्र चतुर्थी विकारवाचकपदाच्चतुर्थीत्यर्थः। एवञ्च प्रकृतिविकृतिभावेन भेदविवक्षायामेव चतुर्थी तेनाभेदविवक्षायां भक्तिर्ज्ञानं कल्पते इत्यादौ परत्वात् प्रथमैव। जनिकर्त्तुः प्रकृतिरित्यपादानत्वं चेत् विवक्ष्यते तदाऽपादानत्वमेव भक्तेर्ज्ञानं जायते इत्यादि। अत्र च क्लृपीत्यर्थपरं तदाह सम्पद्यत इति। भक्तिर्ज्ञानाय कल्पते इत्यादिप्रयोगस्य तादर्थ्यचतुर्थ्यैव सिद्धावपि परिणामकारणयोभार्थं सूत्रमिति बोध्यम्।

(१२७) चकारात् सुखयोगेऽपीत्यर्थः चतुर्थी तदर्थार्थबलिहितसुखरक्षितैरिति(२४१४०) अत्र सुखयोगे चतुर्थ्याः समासविधानात् ज्ञापकादिति बोध्यम्।

(१२८) क्रिया अर्थः फलं यस्य सा क्रियार्था तेन च धात्वर्थं लक्ष्यते एवञ्च

मानस्य तुमुनः कर्मणि चतुर्थी स्यात्। फलेभ्यो याति। फलान्याहर्तुं यातीत्यर्थः। नमस्कुर्मो नृसिंहाय नृसिंहमनुकूलयितुमित्यर्थः। एवं स्वयम्भुवे नमस्कृत्येत्यादावपि।

**तुमर्थाच्च(१२९)भाववचनात्। २। ३। १५।**

भाववचनाश्चेति(३।३।११सू०) सूत्रेण (१३०)यो विहितस्तदन्ताच्चतुर्थी स्यात्। यागाय याति यष्टुं यातीत्यर्थः।

**नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च।२। ३।१६।**

---

क्रियाफलकार्यकत्वाचकमित्यर्थः तदुपपदं यस्य तेन क्रियार्थक्रियावाचकोपपदकमित्यर्थः। स्थानिशब्दस्याप्रयुज्यमानपरो व्याकरणशास्त्रे प्रसिद्धः क्रियार्थोपपदत्वस्य तुमुनादेरेवेत्याशयेन व्याचष्टे क्रियार्था क्रियेति। फलेभ्य इत्यत्र फलकर्मकाहरणफलकं यानमिति बोधः यथा वाक्यार्थबोध्यैकदेशप्रयोगस्थले प्रविश पिण्डीमित्यादौ पिण्डीमितिपदस्य सम्पूर्णवाक्यार्थबोधने शक्तिः तथाऽस्य समुदायस्य आहरणफलकोक्तार्थे शक्तिः स्थानिन इति शास्त्रबलादिति भावः। पिण्डीमित्यादौ अप्रयुज्यमानभक्षणक्रियाकर्मणि चतुर्थीवारणाय क्रियार्थोपपदस्येति अयमेवार्थाध्याहारः। नमस्कुर्म इत्यत्र नमःस्वस्तीत्यादिना न चतुर्थी तस्या उपपदविभक्तित्वेन कारकविभक्तिद्वितीयापेक्षया दुर्बलतया बाधात्।

(१२९) तुमुन्शब्देन तदर्थो लक्ष्यते तेन तुम् तुमर्थोऽर्थो यस्येति तुमर्थस्तुमर्थार्थ इत्यर्थः।

(१३०) भाववचनाश्चेति सूत्रेणेति भावे ये प्रत्यया उक्तास्ते क्रियार्थक्रियावाच्युपपदे भविष्यति काले स्युरिति तत्सूत्रार्थः तुमुनादेश्च समानकर्तृकत्वद्योतनात् एतत्सूत्रोक्तप्रत्ययानां भावार्थकतया परार्थकक्रियायां न प्रयोगः। अत एव समानकर्तृकत्वबोधनार्थमेव चतुर्थ्यानेकविधिः।

एभिर्योगे चतुर्थी स्यात्। हरये नमः। उपपदविभक्तेः कारकविभक्तिर्बलीयसी। नमस्करोति देवान्। प्रजाभ्यः स्वस्ति। अग्नये स्वाहा। पितृभ्यः स्वधा। अलमिति पर्याप्त्यर्थग्रहणम्। तेन दैत्येभ्यो हरिरलम्प्रभुः समर्थः शक्त इत्यादि। प्रभ्वादियोगे षष्ठ्यपि साधुः तस्य तस्मै वा प्रभवति स एषां ग्रामणीरिति निर्देशात्। तेन प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम्। इन्द्राय वषट्। चकारः पुनर्विधानार्थः। तेनाशीर्विवक्षायाम्परामपि चतुर्थीं चाशिषीति(३०१४०)षष्ठीं बाधित्वा चतुर्थ्येव भवति। स्वस्ति गोभ्यो भूयात्।

**मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ।२। ३। १७।**

प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे(१२१) न त्वां तृणं मन्ये तृणाय वा। श्यना निर्देशात्तानादिकयोगे न। न त्वान्तृणम्मन्वे। अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्जेष्विति वाच्यम्*। तेन न त्वां नावमन्नं वा मन्ये इत्यत्राप्राणित्वेऽपि न चतुर्थी। न त्वां शुने श्वानं वा मन्ये इत्यत्र प्राणित्वेऽपि भवत्येव।

---

(१२१) अनादर इति आदराभावमात्रं न नञोऽर्थोऽपि तु अधर्मादाविव प्रतिपक्षभावितस्तिरस्कार एवार्थ इत्याशयेनाह तिरस्कारेति। मन्यतेः कर्मणि विशेषण एव चतुर्थी तेन उद्देश्यीभूतार्थेऽपि भावः। तिर-स्कारश्चात्र नामकर्मणामात्ररूपः किन्तु अपकृष्टत्वाभिव्यञ्जकविशेषणेन-त्वाद्यापकृष्ट इत्येवंविधे मनुते आख्यानात् तव्यतीति च मनुष्यमभि-

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामन-ध्वनि। २। ३। १२।

अध्वभिन्ने गत्यर्थानां कर्मणि एतौ स्तश्चेष्टायाम्। ग्रामं ग्रामाय वा गच्छति। चेष्टायाङ्किम् (१२२) मनसा हरिं व्रजति। अनध्वनीति किम् पन्थानङ्गच्छति(१२३)। गन्त्राधिष्ठिते(१२४) अध्वन्येवायन्निषेधः यदा तूत्पथात्पन्थानमेवाक्रमितुमिच्छति तदा चतुर्थी भवत्येव। उत्पथेन पथे गच्छति।

। चतुर्थी।

---

ध्रुवमपायेऽपादानम्(१२५)। १। ४। २४।

---

आहार एव तथाप्येतस्य तथाविधस्यार्थस्य न सम्भवे इत्यर्थः "तथाय मत्वा रघुनन्दन" इत्यादौ तु गतोऽग्रपथेऽपि तदध्याहारेण बोधः इत्यन्ये।

(१२२) चेष्टायामिति शारीरक्रियाव्यापारेण चेष्टात्वात् प्रश्नः। शा-रीरक्रियाया एव चेष्टात्वमित्युत्तरम्।

(१२३) पन्थानमिति अध्वपदस्यार्थपरत्वात् प्रत्यक्षो प्रत्युदाहरणम्।

(१२४) गन्त्राधिष्ठित इति यत्प्रयोगसमानकालमनुष्यापारजन्यफलाश्रये इत्यर्थः अध्वपदेन मनुष्याध्वोऽर्थं लभ्यते उत्पथादित्यत्र उत्पथं परि-त्यज्येत्यर्थः। इष्यते इति न त्वाक्रम्य इत्यर्थंत्वेन गन्त्रनधिष्ठितत्वान्न चतुर्थीनिषेधः। तथा च उत्पथेन गन्तुमयं पथे गन्तुं प्रवर्तते इत्यर्थः। चतुर्थी।

(१२५) ध्रुवमिति अपाये विभागजनकव्यापारजन्यफलाश्रयोऽपादानमित्यर्थः इत्यत्र पञ्चमी विभागार्थकधातुयोग एव साधुः। विभागश्च न वास्तव सम्बन्धपूर्वको न च वास्तव एव किन्तु बुद्धिकल्पितसम्बन्धपूर्वको बुद्धि-

अपायो विश्लेषस्तस्मिन् साध्ये यद्ध्रुवमवधिभूतङ्कारकन्त-
दपादानं स्यात् ।

अपादाने पञ्चमी । २ । ३ । २८ ।

---

कल्पितश्च "माथुराः पाटलिपुत्रकेभ्य आढ्यतरा" इत्यादेः बुद्धिकल्पित
विभागाश्रयणेनैव भाष्ये पञ्चमीसमर्थनात् । ध्रुवमिति कर्त्तृवारणाय
तथा च अपायविषये यत्कारकं विश्लेषक्रियाजनकं तदपादानमिति
फलितोऽर्थः ध्रुवत्वञ्च प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्यविभागा-
श्रयत्वं तच्चावधित्वं तदेतदाह अवधिभूतमिति अत्र सोदाहरणा
विषयविशेषा हरिणा दर्शिता यथा ।

अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेवातदावेशात् तदपादानमुच्यते ।
पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ।
मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्त्तृत्वञ्च पृथक् पृथगिति ।

कुड्यात्पततोऽश्वात् सैन्यः पततीत्यादौ कुड्यावधिकपतनाश्रयाश्वावधिकं
सैन्यादिनिष्ठं पतनमिति बोधः । अत्रायं विशेषः अवधेः पञ्चम्य-
र्थत्वे प्रकृत्यर्थस्य तत्राभेदेन विशेषणत्वम् पतनादिक्रियायान्तु सम्बन्धि-
तया पञ्चम्यर्थस्य विशेषणत्वमिति । तच्चापादानं त्रिविधम् ।

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियञ्चेति त्रिधापादानमिष्यते इति हर्युक्तेः ।

निर्दिष्टः श्रूयमाणो विषयो यस्य तत् श्रूयमाणस्यापेक्षित क्रियमि-
त्यर्थः यथा वृक्षात् पर्णं पततीत्यादौ अपादानविषयीभूतं पतनं श्रूय-
माणम् । द्वितीयस्तु उपात्तः स्वीकृतः धात्वन्तरार्थघटकीभूत इति या-
वत् विषयो यस्येति व्युत्पत्त्या स्वविषयक्रियाघटितश्रूयमाणक्रियान्तर-

ग्रामादायाति । धावतोऽश्वात्पतति । कारकमिति किम् । वृक्षस्य पर्णं पतति । जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्(१६) * । पापाज्जुगुप्सते विरमति । धर्मात्प्रमाद्यति ।

---

मित्यर्थः यथा मेघात् तद्योतते विद्युदित्यादौ निःसरणपूर्वकविद्योतनार्थकविद्योततियोगे मेघादेस्तदेकदेशनिःसरणाद्यपादानत्वम् । अपेक्षितक्रियं तृतीयं यथा कुतो भवानिति प्रश्नवाक्ये पाटलिपुत्रादित्युत्तरवाक्ये च कुत इति पाटलिपुत्रादित्यनयोरपेक्षितगत्यादिक्रियापेक्षत्वात् अपेक्षितक्रियापादानत्वम् । पतधातोरकर्मकत्वे वृक्षात् पत्रं पततीत्यादौ वृक्षावधिकविभागपूर्वकः पत्रवृत्तिः संयोग इति बोधः । तस्य सकर्मकत्वे वृक्षात् भूमिं पततीत्यादौ वृक्षावधिकविभागपूर्वकभूमिवृत्तिसंयोगानुकूलो व्यापार इति बोधः । परस्परस्मान्मेषावपसरत इत्यादौ मेषपदोपात्तयोरेव क्रियाश्रयत्वात् कर्तृत्वम् परस्परपदोपात्तयोश्च विभागाश्रयत्वादपादानत्वमिति विवेकः । विभागपूर्वकं पृष्ठतो गमनमपसृतेरर्थः । आत्मानम् आत्मना वेत्सीत्यादौ अन्तःकरणाद्युपाधिभेदेनौपाधिकभेदविवक्षया यथा कर्मत्वकर्तृत्वकरणत्वादिव्यवस्थापनं तथा पञ्चरूपोपाधिभेदकल्पनेऽप्यनयोरुभयसमावेश इति न किञ्चिदधिककल्पनेति बोध्यम् । ग्रामादायातीत्यादौ विभागपूर्वकोत्तरसंयोगानुकूलव्यापारस्य धात्वर्थतया विभागाश्रयत्वादपादानत्वम् अन्यतेस्तु अन्यगमनमात्रार्थकतया ग्रामे अन्यते इत्येव प्रयोगः । चलतेस्तु विभागपूर्वकचलनविवक्षायाम् आसनाच्चलित इति प्रयोगः । इत्थं त्यजतीत्यादौ विभागस्य बोधनेऽपि तस्य व्यापारव्यधिकरणत्वेन कर्मतया कर्मसंज्ञयैव बाधः । कायाद्धीयते पुरुष इत्यादौ कायस्यैव धात्वर्थप्रधानव्यापाराश्रयत्वेऽपि अपादानेऽधाहीयरुहोरिति (७२७४०) ज्ञापकात् कर्मप्रत्ययान्तहीयातियोगे कर्तुरपादानत्वम् पुरुषस्य च कर्मत्वविवक्षया कर्मत्वानुकारेणोक्ततेति विवेकः ।

(१२६) जुगुप्सेत्यादि । अनिष्टसाधनताज्ञानाधीना निन्दा जुगुप्सा । तत्र-

## भीत्रार्थानां (१३७) भयहेतुः। १। ४। २५।

भयार्थानां त्राणार्थानाञ्च प्रयोगे भयहेतुरपादानं स्यात्। चौराद् विभेति। चौरात्त्रायते। भयहेतुः किम्। अरण्ये विभेति त्रायते वा।

## पराजेरसोढः (१३८)। १। ४। २६।

पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात्। अध्ययनात्पराजयते ग्लायतीत्यर्थः। असोढः किम्। शत्रून् पराजयते अभिभवतीत्यर्थः।

## वारणार्थानामीप्सितः। १। ४। २७।

प्रवृत्तिविघातो (१३९) वारणं वारणार्थानां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात्। यवेभ्यो गां वारयति ईप्सितः किम् यवेभ्यो गां वारयति क्षेत्रे।

---

भावाद्बुद्ध्यापायो विरामः। इष्टानिष्टावगमयोरविपरीतप्रमिया तत्र प्रवृत्तिनिवृत्ती प्रमादः वर्जने च विषयतया धात्वर्थाश्रयत्वादौ अन्वयी अपादानसंज्ञः स्यादित्यर्थः।

(१३७) भीत्रार्थानामिति भयमित्यत्र भीतित्राणार्थानां प्रयोगे भयम् अनिष्ट-वारणं त्राणं तत्र भयं भयहेतुर्योऽनिष्टं तद्धेतुरपादानमित्यर्थः।

(१३८) सोढुमशक्योऽसोढः अत्र अध्ययनाध्यौ ... पराजयतेरध्ययनपराजययोरपादानमित्यर्थः शत्रून् पराजयतीत्यादौ अभिभवार्थे सकर्मकत्वान्न विषयः।

(१३९) प्रवृत्तिविघातोऽभिप्रेतविषयप्रवृत्त्यभावो वारणं तत्र निवर्तितविषयोऽपादानं यथा ईप्सितत्वेन ... अपादानसंज्ञाविधिरिति बोध्यम्।

**अन्तर्द्धौ येनादर्शनमिच्छति। १।४।२८।**

व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति (१४०) तदपादानं स्यात्। मातुर्निलीयते कृष्णः। अन्तर्द्धौ किम् चौरान्न दिदृक्षते। इच्छति ग्रहणं (१४१) किम् अदर्शनेच्छायां सत्यां सत्यपि (१४२) दर्शने यथा स्यात्। देवदत्तात् यज्ञदत्तो निलीयते।

**आख्यातोपयोगे। १। ४। २९।**

नियमपूर्व्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्। उपाध्यायादधीते। उपयोगे किम् नटस्य गाथां शृणोति।

**जनिकर्त्तुः प्रकृतिः(१४३)। १। ४। ३०।**

जायमानस्य हेतुरपादानं स्यात्। ब्रह्मणः प्रजाः प्रजायन्ते

**भुवः प्रभवः। १। ४। ३१।**

---

(१४०) अन्यकर्तृकस्वकर्मकादर्शनेच्छया तदनुकूलव्यापारो व्यवहितशब्दस्य- त्वादिरूपोऽन्तर्द्धिं तदुपरकमदर्शनं यत्कर्तृकमिच्छति तदपा- दानमित्यर्थः।

(१४१) इच्छतिग्रहणं किमिति अन्तर्द्धौ यत्कर्तृकदर्शनस्याभावस्तदपादान- मित्यर्थोऽस्त्विति प्रश्नः।

(१४२) सत्यपीत्यर्थः अदर्शनेच्छया तदनुकूलव्यापारकरणे दैवयोगात् दर्शने सत्यपीत्यर्थः अन्यथा यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः।

(१४३) प्रकृतिरुपादानकारणं ब्रह्म च मायावच्छिन्नमुपादानकारणं प्रकृतिश्च दृष्टा- न्तानुपरोधादिति गार्गीरक्षणात् विभाषेत्यत्र(२८२४०)योगविभागेनैव सिद्धे उपादानतयापादानत्व बोधार्थं तृतीयानिरासार्थञ्चेदं सूत्रम्।

भवनभूः भूकर्त्तुः (१४४) प्रभवस्तथा। हिमवतो गङ्गा प्रभवति तत्र प्रकाशत इत्यर्थः। ल्यब्लोपे (१४५) कर्म्मण्यधिकरणे च॥। प्रासादात् प्रेक्षते। आसनात् प्रेक्षते। प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः। श्वशुराज्जिह्रेति श्वशुरं वीक्ष्ये त्यर्थः। गम्यमानापि (१४६) क्रिया कारकविभक्तीनाम्निमित्तमित्युक्तम् (२८५पृ०)। कस्मात्त्वं नद्याः। यतश्चाध्वकालनिर्म्माणं (१४७) तत्र पञ्चमी तद्युक्तादध्वनः प्रथमासप्तम्यौ कालात्सप्तमी च वक्तव्या॥। वनात् ग्रामो योजनं योजने वा कार्त्तिक्या आग्रहायणी मासे।

**अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहि-युक्ते।२।३।२९।**

एतैर्योगे पञ्चमी स्यात्। अन्येत्यर्थग्रहणम् (१४८)। इत-

---

(१४४) जनिकर्त्तुरित्यतः कर्त्तुरिति पदं समस्तमपि स्वरितत्वेनानुवर्त्त्याह भूकर्त्तुरिति. प्रभवः प्रथमप्रकाशः अन्यतः सिद्धस्य प्रथमसुपलम्भ इति यावत् "प्रभवो जनने मूले जन्महेतौ पराक्रमे। स्थानस्य चादिसम्बन्धे स्यात्" इति विश्वकोषात्। प्रकाशते इत्यस्य तु योगे न तत्र प्रथमप्रकाशार्थाभावादिति बोध्यम्।

(१४५) ल्यब्लोप इति ल्यबन्ततया श्रवणाभावेऽपीत्यर्थः कर्माधिकरणे प्रत्यासत्त्याऽनूद्यमानस्याध्याहरिष्यमाणल्यबन्तस्यैवेति बोध्यम्।

(१४६) गम्यमानापीति विशिष्य तद्वाचकशब्देनानुपस्थाप्यमानापीत्यर्थः अपेक्षितक्रियमिदमित्युक्तं (२८५पृ०) प्राक्।

(१४७) यतो यदवधित्वेनाध्वनः कालस्य च निर्माणं परिच्छेदस्तत इत्यर्थः। एवञ्च देशकालयोः परिच्छेदावधिभूतवाचकात् पञ्चमी स्यादित्यर्थः।

(१४८) अन्येत्यर्थं ग्रहणं भेदार्थकशब्दमात्रग्रहणमितरग्रहणन्तु प्रपञ्चार्थं

रग्रहणमपञ्चार्थम् अन्यो भिन्न इतरो वा कृष्णात्। आरात्(१४९)वनात्। ऋते(१५०)कृष्णात्। पूर्व्वो ग्रामात्। दिशि दृष्टः शब्दो (१५१)दिक्शब्दः तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति। चैत्रात्पूर्व्वः फाल्गुनः। अवयववाचियोगे तु न(१५२)तस्य परमाम्रेडितमिति(४८पृ०)निर्द्देशात्। पूर्व्वं कायस्य। अञ्चूत्तरपदस्य (१५३) तु दिक्शब्दत्वेऽपि षष्ठ्यतसर्थेति(२८५पृ०)षष्ठीं बाधितुं(१५४)पृथग्ग्रहणम्। प्राक्

---

विस्तारेण प्रदर्शनार्थम्। वस्तुत इतरग्रहणं निपातभिन्नस्य भेदार्थकस्य ग्रहणार्थं तेन घटात् भिन्न इत्यादाविव घटः पटो नेत्यादौ नञा भेदबोधनेऽपि तस्य निपातत्वात् न तद्योगे पञ्चमी। पृथक्शब्दस्य स्वरादित्वात् निपातसत्त्वाभावेन तद्योगे पञ्चमीप्राप्तावपि पृथग्विनेत्यादिना (२९१पृ०) विकल्प इति बोध्यम्।

(१४९) "आरात् दूरसमीपयोः" तेनैतद्योगे दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति (२८६पृ०) प्राप्तां पाक्षिकीं षष्ठीं बाधित्वानेन पञ्चमी।

(१५०) ऋते इति "फलति पुरुषाराधनमृते" इत्यादौ तु ततोऽन्यत्रापि दृश्यते (२९२पृ०) इत्युक्तेः यावदादियोगे नदीं यावदिदं वनमित्यादिवत् ऋतेर्योगेऽपि द्वितीयेति बोध्यम्।

(१५१) दिशि दृष्ट इति शब्दपर्य्यन्तग्रहणात् दिशां दिग्विशेषस्य च वाचका एव पूर्व्वादयो गृह्यन्ते न तु ऐन्द्रीककुभादयः।

(१५२) नेति न पञ्चमीत्यर्थस्तस्योदाहरणेन ज्ञापयन्नाह पूर्वं कायस्येति अवयवे पूर्वत्वस्य प्रथमकालोत्पत्तिकत्वेनैवेति बोध्यम्।

(१५३) अञ्चूत्तरेति दिक्शब्दमाहचर्य्यात् दिग्वाचकस्यैवास्य ग्रहणं नान्यार्थकस्य तेन प्राङ् देवदत्तेनेत्यादौ न।

(१५४) बाधितुमिति परत्वात् प्राप्तामपि पुरस्तादपवादेन बाधितुमित्यर्थः।

प्रत्यग् वा ग्रामात् । आच् । दक्षिणा (१५५) ग्रामात् । आहि । दक्षिणाहि ग्रामात् । अपादाने पञ्चमीति सूत्रे कार्त्तिक्याः प्रभृतीति भाष्यप्रयोगात् प्रभृतियोगे (१५६) पञ्चमी । भवात्प्रभृति आरभ्य वा (१५७) सेव्यो हरिः । अपपरिबहि-रिति (६८१सू०) समासविधानात् ज्ञापकात् (१५८) बहिर्योगे पञ्चमी (१५९) ग्रामाद्बहिः ।

**अपपरी वर्जने । १ । ४ । ८८ ।**

एतौ वर्जने कर्मप्रवचनीयौ स्तः ।

---

(१५५) दक्षिणेत्यादि दक्षिणस्यामित्यर्थे दक्षिणादाजिति (६८६सू०) आहि च दूरे (६८७सू०) इत्याजाहौ । पञ्चम्यर्थे त्वस्यापवादः ।

(१५६) प्रभृतियोगे प्रभृत्यर्थकशब्दयोगे इत्यर्थः अन्यथा उदाहरणे आरभ्य वेत्युल्लिखनकृता स्यात् प्रभृतीत्यस्यावधिमादायेत्यर्थकत्वेनारभ्येत्यस्यापि तदर्थकता । अवधौ च पञ्चम्यन्तार्थस्याभेदेनान्वयः तद्विशेषणत्वेऽपि न द्वितीया प्रभृत्यर्थयोगे पञ्चमीति भाष्यप्रयोगरूपज्ञापकात् । आरभ्ये-त्यस्य गृहीत्वेत्याद्यर्थकत्वेऽवधिमारभ्येत्यादौ द्वितीयैवेति विवेकः ।

(१५७) भवादिति भवकालावधिके मरणान्तकाले भवकालमादाय वा सेव्य इति बोधः ।

(१५८) ज्ञापकादिति पञ्चम्यन्तेन समासविधानरूपज्ञापकादित्यर्थः । अयं भावः अत्र सूत्रे परस्परसाहचर्यात् तत्रापपरी वर्जनार्थौ कर्मप्रवच-नीयावेव तद्योगे पञ्चम्यपाङ्परिभिरिति (६८१सू०) वचनात् अपपरि-भिरित्यत्र पञ्चम्यैव समासः तत्सूत्रसाहचर्यात् बहिर्योगेऽपि पञ्चम्यैव समासो युक्तोऽतः तद्योगे असति पञ्चमीविधाने कथं पञ्चमीसमास इत्याक्षेपात् तद्योगे पञ्चमीति गम्यते इति ।

(१५९) पञ्चमीति पञ्चम्यपीत्यर्थः तेन करस्य करभो बहिरित्यादौ षष्ठ्यपि साधुरिति बोध्यम् ।

## आङ् मर्य्यादावचने । १ । ४ । ८९ ।

आङ् मर्य्यादायामुक्तसंज्ञः स्यात् । वचनग्रहणादभिविधावपि (१९०) ।

## पञ्चम्यपाङ्परिभिः । २ । ३ । १० ।

एतैः कर्म्मप्रवचनीयैर्योगे पञ्चमी स्यात् । अप हरेः परि हरेः संसारः । परिरत्र वर्जने (१९१) लक्षणादौ तु हरिम्परि । आ मुक्तेः संसारः । आ सकलात् ब्रह्म ।

## प्रतिः प्रतिनिधिप्रतिदानयोः ।१।४।९२।

एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात् ।

## प्रतिनिधिप्रतिदाने(१९२)च यस्मात् ।२।३। ११ ।

---

(१९०) उच्यतेऽनेनेति वचनं मर्य्यादायावचनं मर्य्यादाबोधकमित्यर्थः अवधीभूताया मर्य्यादायाः सापेक्षतया स्वप्रतियोग्यनुयोगिनोरुभयोरप्याकाङ्क्षितत्वात् अभिव्याप्तेरपि तद्बोधे बोधादित्याशयेनाह वचनग्रहणादिति । तथा च आधिक्यातं विवक्षितमित्युभयोः संग्रह इति भावः ।

(१९१) लक्षणाद्यर्थकपरियोगे द्वितीयाविधानात् अत्र पञ्चमीविधौ वर्ज्जनार्थकापसाहचर्य्यात् वर्ज्जन एव परिर्ग्राह्य इति भावः । हरिं परि परि हरेरित्युभयत्र हरिं वर्ज्जयित्वेत्यर्थः ।

(१९२) प्रतिनिधीयतेऽसौ इति प्रतिनिधिः सदृशः कर्म्मणि किप्रत्ययान्तः तुल्यमूल्यस्य वस्तुनः प्रतिदानं प्रत्यर्पणं भावल्युडन्तं यस्मादिति मत्वर्थे

अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् ।

## अकर्त्तर्य्यृणे पञ्चमी । २ । ३ । २४ ।

कर्त्तृवर्जितं (१६३) यदृणं हेतुभूतन्ततः पञ्चमी स्यात् । शताद्बद्धः । अकर्त्तरि किम् शतेन (१६४) बन्धितः ।

## विभाषा गुणेऽस्त्रियाम् । २ । ३ । २५ ।

गुणहेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याज्जाड्येन वा बद्धः । गुणे किम् धनेन कुलम् । अस्त्रियाङ्किम् । बुद्धा मुक्तः विभाषेति योगविभागात् (१६५) अगुणे स्त्रियाञ्च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः (१६६) ।

---

पञ्चमी प्रतिनिधिप्रतिदाने यत्सम्बन्धिनी ततः कर्मप्रवचनीययुक्तात् पञ्चमीत्यर्थः । अत्र यस्मादिति निर्द्देशलिङ्गात् तद्योगे क्वचित् पञ्चम्यपि साधुरिति ज्ञापितं तेन कृष्णस्य कृष्णाद्वा प्रतिनिधिरित्यादौ उभयी विभक्तिरिति बोध्यम् ।

(१६३) कर्त्तृवर्ज्जितं कर्त्तृसंज्ञारहितमित्यर्थः अपादाने स्वरूपसन्निमित्तं न तु वाच्यकोटिनिविष्टं तद्बोधकशब्दाभावेऽपि स्यादेवेति भावः ।

(१६४) हेतावित्यस्यानुवर्त्तनात् हेतुभूतमित्युक्तम् शतेनेत्यत्र शतस्य प्रयोजककर्त्तृतया तत्प्रयोजको हेतुश्चेति(७।१८६४०)हेतुत्वसत्त्वेऽपि कर्त्तृसंज्ञया बाध इति भावः ।

(१६५) योगविभागादिति बाहुलकं प्रकृतेस्तदनुदृष्टेरिति वार्त्तिकप्रयोगात् योगविभागाश्रयणमिति भावः ।

(१६६) धूमादिपदस्य तज्ज्ञाने लाक्षणिकत्वं तत्र गुणत्वसम्भवेनादोषेऽपि स्त्रियामित्यस्य व्यभिचारं दर्शयति अनुपलब्धेरिति ।

**पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ।२।३।३२।**

एभिर्योगे तृतीया स्यात्पञ्चमीद्वितीये (१६७)च । अन्यतरस्यांग्रहणं समुच्चयार्थम्पञ्चमीद्वितीये चाऽनुवर्त्तेते । पृथक् रामेण रामात् रामं वा । एवं विना नाना ।

**करणे च स्तोकाल्पकृच्छ्रकतिपयस्याऽसत्त्ववचनस्य ।२।३।३३।**

एभ्योऽद्रव्यवचनेभ्यः(१६८)करणे तृतीयापञ्चम्यौ स्तः । स्तोकेन स्तोकाद्वा मुक्तः । द्रव्ये तु स्तोकेन विषेण हतः ।

**दूरान्तिकार्थेभ्यो द्वितीया च ।२।३।३५।**

एभ्यो द्वितीया स्यात् । चात्पञ्चमीतृतीये (१६९) स्तः । प्राति-

---

(१६७) पञ्चमी मण्डूकप्लुत्या द्वितीया तु सन्निधानादनुवर्त्तते इत्याशयेनाह पञ्चमीद्वितीये चेति ।

(१६८) असत्त्वेति द्रव्यवचनभिन्नेभ्य इत्यर्थः द्रव्यत्वञ्च सर्वनामपरामर्शयोग्य लिङ्गनिरूपितविशेष्यताश्रयो वा तथा च स्तोकादयः शुक्लादिवत्स्वतः धर्म्मवचना धर्म्मिवचनाश्च । करणत्वञ्चैतेषां परम्परया । ईदृशार्थ एव तेषां साधुत्वं सूत्रबलादिति भावः । अत एव लघुत्तरपद इत्यत्र कैयटेन करणे किं स्तोकं पचतीति क्रियाविशेषणे कर्मणि माभूत् असत्त्वभूतफलसमानाधिकरणविशेषणत्वात् स्तोकशब्दस्यासत्त्ववचनत्वमित्युक्तम् । शब्देन्दु० ।

(१६९) दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामित्यतः (२।३।३४) समुच्चयार्थकान्यतरस्यां ग्रहणानुकर्षेण पञ्चमीलाभेऽपि चकारोऽव्यवहिततृतीयासमुच्चयार्थ इत्याह चात् पञ्चमीतृतीये इति । पञ्चमी ।

पदिकार्थमात्रे विधिरयम् । ग्रामस्य दूरन्दूरात् दूरेण वा । अन्तिकम् अन्तिकात् अन्तिकेन वा । असत्त्ववचनस्येत्यनुवृत्तेर्नेह । दूरः पन्थाः ।

। पञ्चमी ।

---

**षष्ठी शेषे । २ । ३ । ५० ।**

कारकप्रातिपदिकार्थव्यतिरिक्तः—(१७०) स्वस्वामिभावादिः सम्बन्धः शेषस्तत्र षष्ठी स्यात् । राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो

---

(१७०) उक्तादन्यः शेषः कर्मादयश्च प्रातिपदिकार्थान्ता उक्तास्तेषु च द्वितीयादीनां विधानात्तदन्यत्र षष्ठीत्याशयेन व्याचष्टे कारकेत्यादि । षष्ठ्यर्थसम्बन्धस्य सम्बन्धत्वेनैव भानमिति कारकादीनामपि सम्बन्धत्वेन भाने षष्ठ्येवेत्याह सम्बन्धमात्रविवक्षायामिति सम्बन्धत्वेन भाने इत्यर्थः

सम्बन्धश्च क्रियामूलक एव यथोक्तं हरिणा

सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।

अश्रुतायां श्रुतायां वा क्रियायामभिधीयते इति ।

तत्र राज्ञः पुरुष इत्यादौ सेवनादिक्रियाया अश्रुतायाः कर्तृत्वादिना उपकार्य्योपकारकभावः, मातुः स्मर्यते इत्यादौ तु श्रुताया एव स्मरणादिक्रियायाः कर्मत्वेन तथेति विवेकः । अतएव सूत्रे अन्यादिपदमनुक्त्वा तस्य सकलद्योतनार्थं शेषपदग्रहणम् ।

कर्मादिकारकेषु च शेषत्वविवक्षायां यथा षष्ठी तथाऽग्रे वक्ष्यति ।

(२९६४०) प्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेष्यत्वात् राज्ञः पुरुष इत्यादौ राजनिरूपितसेवकत्वरूपसम्बन्धवान् पुरुष इति बोधः राज्ञः शेषत्वविवक्षायां पुरुषस्य राजेत्यपि भवत्येव तत्र च पुरुषनिरूपितशेषत्वसम्बन्धवान् राजेति बोधः एवञ्च सम्बन्धस्योभयनिष्ठत्वेऽपि प्रतियोगिपदादेव षष्ठी नानुयोगिपदादित्यवगन्तव्यम् । यथोक्तं हरिणा

आनीते । मातुः स्मरति । एधोदकस्योपस्कुरुते भजे शम्भोश्चरणयोः । फलानान्तृप्तः ।

**षष्ठी हेतुप्रयोगे । २ । ३ । २६ ।**

हेतुशब्दप्रयोगे हेतौ(१७१)द्योत्ये च षष्ठी स्यात् । अन्नस्य हेतोर्वसति ।

**सर्वनाम्नस्तृतीया च । २ । ३ । २७ ।**

सर्व्वनाम्नो हेतुशब्दप्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च । केन हेतुना वसति कस्य हेतोः, निमित्तपर्य्याय(१७२) प्रयोगे सर्व्वासाम्प्रायो दर्शनम्* । किन्निमित्तं वसति केन निमित्तेन कस्मै निमित्तायेत्यादि । एवङ्कारणम् । को हेतुः । किम्प्रयोजनमित्यादि । प्रायग्रहणादसर्व्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः ज्ञानाय निमित्तायेत्यादि ।

**षष्ठ्यतसर्थप्रत्ययेन (१७३) । २ । ३ । ३० ।**

---

द्वित्वेऽप्यसौ परार्थत्वात् गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते इति ।

(१७१) हेतौ ( २।३।२३ सू० ) हेतावित्यनुवर्त्तत इत्याह हेताविति हेतुतावच्छेदकमात्रे विवक्षित इत्यर्थः तेनात्र हेतु पदस्याप्रयोगे तत्सम्बन्धाभावात् न षष्ठीति बोध्यम् हेतुवाचिकैव षष्ठीति तात्पर्य्यः ।

(१७२) निमित्तेति तेषां समानाधिकरणपदस्याप्यत्र ग्रहणमित्यर्थः किं निमित्तमिति प्रथमान्तं द्वितीयान्तं चेति बोध्यम् ।

(१७३) दक्षिणोत्तराभ्यामतसुच् (५।३।२८ सू०) योऽर्थः दिगादि योऽर्थो यस्य प्रत्ययस्य तेन योगे इत्यर्थः ।

न्ताप्योरिति वाच्यम्*। रोगस्य चौरज्वरः (१८१) चौरस-न्तापो वा रोगकर्तृकचौरसम्बन्धिज्वरादिकमित्यर्थः।

**आशिषि नाथः। २। ३। ५५।**

आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात्। सर्पिषो नाथनम् (१८२)। आशिषीति किम् माणवकनाथनम् तत्सम्बन्धिनी याञ्चेत्यर्थः।

**जासिनिप्रहण(१८३)नाटक्राथपिषां हिंसायाम्। २। ३। ५६।**

हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात्। चौरस्योज्जासनम्। निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा। चौरस्य निप्रहणनम् प्रणिहननं निहननम् प्रहणनं वा। नट अवस्यन्दने चुरादिः। चौरस्योन्नाटनम् चौरस्य क्राथनं वृषलस्य पेषणम्। हिंसायाङ्किं धानापेषणम्।

**व्यवहृपणोः समर्थयोः। २। ३। ५७।**

---

* शब्दयोगे कर्तृकर्मणोः कृतीति(२००पृ०)षष्ठीति विवेकः। भावकर्तृकाणां किं धर्मस्य चौरज्वरः इत्यत्र शेषषष्ठी तेन समासः।

(१८१) अज्वरीति निषेधात् चौरज्वर इत्यत्र रुजार्थानामित्यस्याप्रवृत्तौ शेषषष्ठी तेन समास इति भावः।

(१८२) सर्पिषो नाथनमिति सर्पिर्मे भूयादित्याशासनमित्यर्थः।

(१८३) निप्रोपसृष्टो हन्तो निप्रहणः। शब्दपरत्वेऽपि सौत्रत्वात् कृत्स्नेरत्व-वैक्षेति (१५८पृ०) णत्वम्।

शेषे कर्मणि षष्ठी स्यात्। द्यूते क्रयविक्रयव्यवहारे चानयो-स्तुल्यार्थता (१८४)। शतस्य व्यवहरणम् पणनं वा। सम-र्थयोः किम् शलाकाव्यवहारः गणनेत्यर्थः। ब्राह्मणपणनं स्तुतिरित्यर्थः।

### दिवस्तदर्थस्य (१८५)। २। ३। ५८।

द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात्। शतस्य दीव्यति। तदर्थस्य किम् ब्राह्मणन्दीव्यति स्तौतीत्यर्थः।

### विभाषोपसर्गे। २। ३। ५९।

पूर्वयोगाऽपवादः। शतस्य शतं वा प्रतिदीव्यति।

### प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने। २। ३। ६१।

देवतासम्प्रदानकेऽर्थे वर्तमानयोः प्रेष्य(१८६) ब्रुवोः कर्मणो

---

(१८४) समपर्यायसंयमेन समासे समभ्यस्य मध्वादित्वात् परक्षेपे वा अते समर्थयोरिति चिह्नं तद्देशाच्च व्यवहृपणोस्तुल्यार्थतेति तथा च क्रयविक्रयव्यवहाररूपार्थकयोरित्यर्थः।

(१८५) तदर्थस्येति तच्छब्देन व्यवहृपणौ परामृश्येते द्यूतक्रयविक्रयव्यवहारेषु तौ दिवस्तुल्यार्थाविति द्यूतार्थस्य क्रयविक्रयेति। इह योगे इति न सम्बध्यते व्याख्यानात् उत्तरत्र विकल्पारम्भसामर्थ्याच्च अन्यथा षष्ठ्यां विकल्पितायां योगे विभक्त्यन्तरस्याप्राप्त्या इहैव विकल्पारम्भः स्यादित्याशयेन समासयोग्यताभावं ध्वनयन् तिङन्तोदाहरणं शतेन दीव्यतीति।

(१८६) प्रेष्येति इषगतावित्यस्मात् लोट्मध्यमपुरुषैकवचनं तद्रूपानु-

हविर्विशेषस्य वाचकाच्छब्दात् षष्ठी स्यात् । अग्नये छागस्य हविषो वपाया: मेदस: प्रेष्य अनुब्रूहि वा ।

**कृत्वोऽर्थप्रयोगे कालेऽधिकरणे । २ । ३ । ६४ ।**

कृत्वोऽर्थानां (१८७) प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात् । पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् । शेषे किम् द्विरहन्यध्ययनम् ।

**कर्तृकर्मणो: कृति । २ । ३ । ६५ ।**

कृद्योगे कर्त्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृति: । जगत: कर्त्ता कृष्ण: । गुणकर्मणि वेष्यते* । नेताऽश्वस्य स्रुघ्नं स्रुघ्नस्य वा । कृति किम् (१८८) । तद्धिते माभूत् । कृतपूर्वी कटम् (१८९) ।

---

* [illegible] विरपि तदन्त एव गृह्यते अतएवेत्यगुणपदार्थं न सम्बध्यते तिङन्तेन सह समासाप्रसक्तेः ।

(१८७) कृत्वसुचोऽर्थ इवार्थो येषां ते कृत्वोऽर्थाः प्रत्ययाः सुजादयः । शेषे किमिति द्विरहन्यध्ययनमित्यादिना (२९९४०) विवक्षितादधिकरणकारक एव षष्ठीविधानं कृतं किं शेषग्रहणेनेति प्रश्नः । द्विरहनीत्यादिवत्- [illegible] स्वीकार्येऽनुत्तरामवः ।

(१८८) कृति किमिति इह कर्तृकर्मणोः क्रिया वाचिकृते प्रकृतौ च भाव- रेव धातोच. द्विविध एव प्रत्ययाः तिङः कृतश्चेति तत्र तिङ्प्रयोगे न लोकेत्यादिना (कृ०२४०) षष्ठीनिषेधेन परिशेषात् कार्येवेदं सूत्रं तदर्थितानोऽन्तः किं कृतीति विशेषाभिधानेनेति प्रश्नः ।

(१८९) कृतपूर्वी कटमिति पद करोति क्रियापेक्षमनभिहितं कर्मत्व- [illegible] तत्र षष्ठी प्राप्नुयात् तदर्थं तद्धितात्वादित्याहतत्त्वे न-

## उभयप्राप्तौ कर्मणि । २ । ३ । ६६ ।

उभयोः प्राप्तिर्यस्मिन् (१८०) कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवान्दोहोऽगोपेन । स्त्रीप्रत्यययोरकाकारयोर्ना

---

तीति षष्ठ्यर्थ इति भावः । अत्र कर्तृवाचकत्वाद् कर्मणि धात्वर्थे भेदेनान्वयेन स्वीकृते तेन लोकं पाचक इत्यादौ क्रियाविशेषणरूपे अभेदान्वयिनि कर्मणि न षष्ठीति । शब्देन्दु० ।

अत्रेदं बोध्यम् कृतपूर्वी कटं भुक्तपूर्वी ओदनमित्यादिभाष्यकारप्रयोगा इष्यन्ते तत्र च कृतं पूर्वमनेनेति विग्रहे सह सुपेति(२१८पृ०)समासे पूर्वादिनि (६७६पृ०) रित्यत इनेरनुवर्तमानत्वात् सपूर्वाच्चेति (६७६पृ०) सूत्रेण इनिर्विधीयते तत्र यदि कृतमिति कर्मणि क्तः स्यात् तदा तस्य कटादिकर्मरूपविशेषणतया सापेक्षत्वेन पूर्वादिपदेन समासो न स्यात् एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्वयायोगात् न चेष्ट-भावः भाष्यप्रामाण्याच्च तत्र इत्थमेषा रीतिराश्रयणीया तथाहि प्रथमं कर्माविवक्षयाऽकर्मकत्वेन भावे क्तप्रत्यये विहिते तदन्तेन पूर्वादीनां सह सुपेति समासे कृते तत्पूर्वकात् पूर्वशब्दादिनिप्रत्ययो भवति । पश्चाच्च कर्तृगतक्रियायाः कर्माकाङ्क्षायां कटादिकर्मणोऽन्वयः एतदेव हरिणा दर्शितं यथा

अकर्मकत्वे सत्येव क्तान्ते भावाभिधायिनि ।
पश्चात् क्रियावता कर्त्रा योगो भवति कर्मणा ।
अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः ।
क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थितेति ।

गमनकर्तृवाचकगतादिमध्यपातिनी गमनक्रिया कर्तृविशेषणत्वेनो-पस्थिता यथा अविग्रहा अन्वीया तथा कृतपूर्वकर्तृबोधककृत-पूर्विघटकापि अन्वयीति तदर्थः । प्रपञ्चितञ्चैतदस्माभिः शब्दार्थरत्ने ।

(१८०) उभयोः प्राप्तिर्यस्मिन्निति तेनैकस्मिन्नेव कृत्प्रत्यये ओदनस्य पाकः ब्रा-

यन्नियमः* (१८१)। भेदिका बिभित्सा वा रुद्रस्य जगतः। शेषे (१८२)विभाषा*। स्त्रीप्रत्यय इत्येके। विचित्रा जगतः कृतिर्हरेर्हरिणा वा। केचित् अविशेषेण (१८३) विभाषामिच्छन्ति। शब्दानामनुशासनमाचार्य्येणाचार्य्यस्य वा।

**क्तस्य च वर्त्तमाने। २। ३। ६७।**

वर्त्तमानार्थस्य क्तस्य योगे षष्ठी स्यात्। न लोकस्येति(१०१४०) निषेधस्यापवादः। राज्ञांमतो बुद्धः पूजितो वा।

---

तृणानां प्रादुर्भाव इत्यादौ विभिन्नक्रियायाः कर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियमः इति भावः। प्राप्तिपदेन चोभयप्रयोग एवायं नियम इति ध्वनितम्। उभयशब्देन कर्तृकर्मणी परामृश्येते। पूर्वसूत्रेण प्राप्तेः नियमार्थमिदमिति ध्वनयन्नाह कर्मण्येवेति।

(१८१) स्त्रीप्रत्यययोरिति स्त्रियां क्तिन् (७४४८सू०) अधिकारविहितयोरित्यर्थः नायं नियम इति एतयोर्योगे उभयप्राप्तौ कर्मण्येव न कर्त्तरीति यो नियम उक्तः स न भवति अपि तु कर्त्तर्य्यपि भवतीत्यर्थः। भेदनं भेदिका धात्वर्थनिर्देशे ण्वुलिति (७४५२सू०)ण्वुल्।

(१८२) शेषे इति कर्त्तर्य्येव विभाषा न तु कर्मणीति ध्वनयन्नुदाहरति विचित्रेत्यादि अत्रैते संग्रहश्लोकाः प्राचीनैरुक्ता यथा

> षष्ठी सम्भाविता यत्र युगपत् कर्तृकर्मणोः।
> अस्त्रीविहितकृद्योगे कर्मण्येव न कर्त्तरि।
> तव्यादीनां प्रयोगे च द्वयोरेव हि नेष्यते।
> कर्तुर्विभाषया केचित् कर्मणोऽपि प्रयोक्ष्यते इति।
> प्रधाने नियता षष्ठी गुणे तूभयथा भवेत्।
> प्रधाने प्रत्ययार्थे तु सुः षष्ठीं कुर्यात्तदा गुणे इति च।

(१८३) अविशेषेणेति स्त्रीप्रत्ययभिन्नेऽपि कृत्प्रत्यये इत्यर्थः।

**अधिकरणवाचिनश्च । २ । ३ । ६८ ।**

क्तस्य योगे षष्ठी स्यात् । इदमेषामासितम् (१९४) ।

**न लोकाव्ययनिष्ठाखलर्थतृनाम् । २ । ३ । ६९ ।**

एषां प्रयोगे षष्ठी न स्यात् । लादेशाः(१९५) । कुर्वन्(१९६) कुर्वाणः सृष्टिं हरिः । उः । हरिं दिदृक्षुः(१९७) अलङ्करिष्णुर्वा । उकः । दैत्यान्घातुको हरिः । कमेरनिषेधः(१९८) । लक्ष्म्याः कामुको हरिः । अव्ययम् । जगत् सृष्ट्वा । सुखङ्कर्त्तुम् । निष्ठा(१९९) । विष्णुना हता दैत्याः । दैत्यान् हतवान्

---

(१९४) इदमेषामिति कर्त्तरि षष्ठी अकर्मकेभ्योऽधिकरणे क्ते कर्त्तृकर्मणोर्द्वयोरप्यनभिहितत्वात् षष्ठी इदमेषां भुक्तमोदनस्येत्यादि । उभयप्राप्ताविति तु मध्येऽपवादन्यायेन कर्त्तृकर्मणोः कृतीत्यस्यैव नियमो नान्यस्येति बोध्यम् ।

(१९५) ल इति लकारादीनां सामान्यग्रहणं तेषाञ्च साक्षात्प्रयोगे न सम्भवतीति तदादेशा एव गृह्यन्ते इत्याह लादेशा इति उदाह्रियन्ते इति शेषः । आदेशग्रहणेन च तत्कार्यकारका अपि गृह्यन्ते तेन सोमं पपिः ददिर्गौ इत्यादौ आदृगमहनजनः किकिनौ लिट् चेति (उ० १७५ सू०) किप्रत्यययोगेऽपि निषेधः तत्र अभ्यासादिरूपलिट्कार्यातिदेशात् ।

(१९६) कुर्वन्निति तृन्प्रत्याहारघटकस्य शानं यद्यप्यस्य तद्घटकत्वेऽपि शतृशानचस्तदन्तर्गतत्वात् लिङ्गादेशस्य लादेशत्वार्थकारिकिकिनोः संग्रहार्थं लपृथग्ग्रहणावश्यकतया तेनैव षष्ठीनिषेधसिद्धिः ।

(१९७) अलङ्कृञ् च उक इति सौत्रोदाहरणेन प्राप्यत्वाह दिदृक्षुरिति ।

(१९८) कमेरिति अकारान्तस्येति शेषः इदञ्च भाषायामेवेति भाष्यकारः ।

(१९९) निष्ठेति निष्ठायोगे कर्मणि षष्ठी सर्वथा निषिद्धा कर्त्तरि तु विकल्प-

विष्णुः । खलर्थः । ईषत्करः प्रपञ्चो हरिणा । तृन्निति (२००) प्रत्याहारः शतृशानचाविति (उ३६५पृ०) तृन्शब्दादारभ्य (उ३६८पृ०) तृनो नकारात् । शानन् । सोमं पवमानः । चानश् । आत्मानं मण्डयमानः । शतृ । वेदमधीयन् । तृन् । कर्त्ता लोकान् । द्विषः शतुर्वा (२०१) । मुरस्य मुरं वा द्विषन् । सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः । शेषे षष्ठी (२०२) तु स्यादेव । ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः ।

**अकेनोर्भविष्यदाधमर्ण्ययोः । २ । ३ । ७० ।**

भविष्यत्यकस्य (२०३) भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । सतः पालकोऽवतरति । व्रजं गामी । शतं दायी ।

---

विशेषे सम्भवति अतोऽत्र कर्मणः सम्बन्धविवक्षयापि न षष्ठीसमासः यथोक्तं हरिणा

निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते ।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते इति ।

(२००) पूङ्यजोः शानन्निति (उ३६७पृ०) शानन् ताच्छील्यवयोवचनशक्तिषु चानशिति (उ३६७पृ०) चानश् इङ्धार्य्योः शत्रकृच्छ्रिणीति (उ३६८पृ०) शतृ । तृन्निति (उ३६८पृ०) तृन् । एतेन जिघृक्षितप्रत्याहारग्रहणाय तृनामित्यत्र णत्वं न कृतमिति बोध्यम् ।

(२०१) द्विष इति द्विषोऽमित्रे इति(उ३६८पृ०) विहिते शतरि वा षष्ठीत्यर्थः।

(२०२) शेषे षष्ठी स्यादिति शास्त्रबोधे वैलक्षण्यमिति भावः एवञ्चापवर्गो गवां दोग्धोऽगोपेनेत्यादौ शेषत्वविवक्षायां कर्त्तर्यपि षष्ठी भवत्येवेति बोध्यम्।

(२०३) आधमर्ण्येऽकस्याविहितत्वादाह भविष्यत्यकस्येति इनस्तूभयोर्विधानादाह भविष्यदाधमर्ण्यार्थेनस्येति । यद्यपि भविष्यत्यको न वर्त्तते तथापि भविष्यति गम्यादय इत्यधिकारे (उ४२१पृ०) विहितः तुमुन्ण्वुलाविति(उ४२२पृ०)अकस्थानी ण्वुलेव गृह्यते इत्याशयेनोदाहरति

## कृत्यानां (२०४) कर्त्तरि वा । २ । ३ । ७१ ।

षष्ठी वा स्यात् । मया मम वा सेव्यो हरिः । कर्त्तरीति किम् गेयो माणवकः साम्नाम् । भव्यगेयेति (७२।५।पृ०) कर्त्तरि यद्विधानादनभिहितङ्कर्म्म । अत्र योगो विभज्यते । कृत्यानामुभयप्राप्ताविति नेति (२०५) चानुवर्त्तते । तेन नेतव्या व्रजङ्गावः कृष्णेन । ततः कर्त्तरि वा । उक्तोऽर्थः ।

## तुल्यार्थैरतुलोपमाभ्यान्तृतीयाऽन्यतरस्याम् । २ । ३ । ७२ ।

तुल्यार्थैर्योगे तृतीया (२०६) वा स्यात्पक्षे षष्ठी । तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा । अतुलोपमाभ्यां किम् । तुला उपमा वा कृष्णस्य नास्ति ।

---

षत: पालकः इति यस्तु कालसामान्ये ल्युडनभिहितस्तस्य नायं निषेधकः तेन ओदनस्य पाचकः पुत्रस्य दर्शक इत्यादौ स्यादेवेति भावः ।

(२०४) कृत्यानामिति कर्त्तृकर्मणोरिति (२०० पृ०) नित्ये प्राप्ते विभाषा कर्त्तृषष्ठ्यास्तु कर्मणि विकल्पं निवृत्त्यर्थम् ।

(२०५) नेतीति निषेधोऽयं कर्त्तरि कर्मणि चानुभयप्राप्तिविषय इति कैयटादयः । व्रजमित्यत्र गुणकर्मणि नेष्यते इति (२०० पृ०) विकल्पस्तु न कृत्यातिरिक्ते चरितार्थस्तत्र दोग्धव्या गावः पयः कृष्णेनेत्यादौ गुणकर्मणि उक्तत्वेन प्रधाने चरितार्थेनानेन परत्वाद्बाधात् । तथा च गुणकर्मणि नेष्यते इति तूभयप्राप्तिरहितस्थले विषयस्तु संपादकगुणकर्मणि नेष्यते इति तूभयप्राप्तिरहितस्थले विषयस्तु संपादकलोकेषु (२०२ पृ०) प्रागुक्तेषु द्रष्टव्यः ।

(२०६) षेषषष्ठ्यां प्राप्तायां विकल्पेन तृतीया अनेन विधीयते । तुल्यार्थैस्तुल्यार्थैरतएवातुलोपमाभ्यामिति पर्युदास उपपद्यते इति तु युक्तम्

**चतुर्थी (२०७) चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः । २ । ३ । ७३ ।**

एतदर्थैर्योगे चतुर्थी वा स्यात् पक्षे षष्ठी आशिषि । आयुष्यं चिरञ्जीवितम् कृष्णाय कृष्णस्य वा भूयात् । एवम्मद्रम्भद्रं कुशलन्निरामयं सुखं शम्, अर्थः प्रयोजनं हितम्पथ्यम्भूयात् । आशिषि किम् । देवदत्तस्यायुष्यमस्ति । व्याख्यानात् (२०८) सर्वत्रार्थग्रहणं भद्रमद्रपर्य्यायत्वादन्यतरो न पठनीयः ।

षष्ठी ।

---

**आधारोऽधिकरणम् । १ । ४ । ४५ ।**

कर्तृकर्मद्वारा (२०९) तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञः स्यात् ।

---

अतएव च पर्युदासात्सत्त्वासत्त्वबोधकस्यानव्ययस्यैव ग्रहणम् । तेन पृथगादीनां साहित्यबोधकत्वेऽपि न तद्योगेऽस्य प्रवृत्तिरिति बोध्यम् । तुलां यदारोहति दन्तवाससेति, स्फुटोपमं भूतिसितेन शम्भुनेत्यादौ तु सहार्थे तृतीयेति मल्लिनाथः ।

(२०७) आशीर्विषयक्रियान्वयार्थकात् प्रातिपदिकात् तद्द्वारायुष्यादियोगे चतुर्थी षष्ठ्यावित्यर्थः । अतएवैतदर्थकचतुर्थ्यन्तेन सुखहितादिभिर्न समासः उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात् । अतएव च सुखेन चतुर्थीसमासविधानं तद्योगे चतुर्थीज्ञापकमित्युक्तमाकरे ।

(२०८) व्याख्यानादिति अर्थशब्दः प्रयोजनवाची पृथक् निमित्तमित्यायुष्यादिषट्कानामर्थपरत्वकथनमिति भावः । षष्ठी ।

(२०९) आश्रियतेऽस्मिन्निति अधिकरणार्थकमिदं आधारपदः त्रिधः क-

## सप्तम्यधिकरणे च । २ । ३ । ३६ ।

अधिकरणे सप्तमी स्यात् । चकारात्(२१०)दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा (२११) । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरेऽन्तिके वा । दूरान्तिकार्थेभ्य इति(२।३।३५) विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः । क्तस्येन्वि-

---

चाधारः कस्येत्याकाङ्क्षायां कारके इत्यधिकारात् क्रियाया एवेति लभ्यते क्रियायाः साक्षादाधारयोश्च कर्तृकर्मणोस्तत्तत्सम्बन्धेन परया एतस्या अभावात् परम्परया तद्द्वारा क्रियाया आधार इह शास्त्र इत्याह कर्तृकर्मद्वारेति । उक्तञ्च हरिणा

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति ।

भूतले घट इत्यादौ सत्तास्तीति पदाध्याहारेण शाब्दबोधः । मूले वृक्षः कपिसंयोगीत्यादौ अस्तिक्रियाध्याहारे तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तित्वाद्याधारत्वम् विशिष्टवृक्षस्य मूलवृत्तित्वबोधेऽप्यवयवे तद्विशिष्टवृक्षाभावप्रतीतेः कपिसंयोगे तदवच्छेदकत्वं फलतीति बोध्यम् ।

(२१०) चकारादिति दूरान्तिकार्थेभ्यः प्रातिपदिकार्थे एव सप्तमीति बोध्यम् ।

(२११) त्रिधेति उप समीपे श्लेषः सम्बन्ध उपश्लेषस्तत्कृतमौपश्लेषिकम् एकदेशावच्छेदेन संबन्धः संयोगादिरूपं तत्कृतमौपश्लेषिकमिति वा सकलावयवव्यापकमभिव्यापकं तद्भिन्नं विषयं वैषयिकम् । सर्वत्राधिकरणक्रियायाः अधिकरणसम्बन्धः । तत्रौपश्लेषिके, कर्तृद्वाराधारे कटे आस्ते इति, कर्मद्वारा तु स्थाल्यां पचतीति । वैषयिके, मोक्षे इति अभिव्यापके सर्वस्मिन्नित्युदाहरणविवेकः ।

षयस्य (२१२) कर्मण्युपसंख्यानम् *। अधीती(२१३)व्याकरणे। अधीतमनेनेति विग्रहे इष्टादिभ्यश्चेति (६७३पृ०) कर्तरीनिः। साध्वसाधुप्रयोगे (२१४) च *। साधुः कृष्णो मातरि। असाधुर्मातुले। निमित्तात्कर्मयोगे* । निमित्तमिह (२१५) फलं योगः संयोगसमवायात्मकः।

---

(२१२) क्तस्येति इन्विषयस्य इनो विषयस्य इन्प्रकृतेः क्तस्य क्तान्तस्य कर्मणीत्यर्थः इन्प्रकृतेरिति व्याख्यानाच्च कृतपूर्वी कटमित्यादौ कटरूपकर्मणि न तत्र सपूर्वाच्चेति, (६७६पृ०) सूत्रेण इन्विधानेनेनः सपूर्वकपूर्वशब्दस्यैव प्रकृतित्वात्। अत्र कर्मशब्देन कालाध्वादिव्यतिरिक्तमेव गृह्यते व्याख्यानात् तेन मासमधीती व्याकरणे इत्यादौ मासादौ नेति कैयटः।

(११२) अधीतीति न कर्मणि क्तः तथात्वे तस्याभिहितत्वया सप्तम्यनुपपत्तेः किन्तु भावे। अन्यत् कृतपूर्वी कटमित्यादेरिवात्रोह्यम्।

(२१४) साध्वसाध्विति शेषषष्ठ्यपवादोऽयम् यत्रार्चा न विवक्षिता किन्तु तत्त्वकथनमात्रं तत्रापि सप्तम्यर्थं वार्त्तिकेऽत्र साधुग्रहणम्। साधुनिपुणाभ्यामर्चायामप्रतेरिति(२१२पृ०)सूत्रे साधुग्रहणं त्वर्चायां प्रतियोगे सप्तमीनिवृत्त्यर्थमिति विवेकः। तत्सूत्रे अर्चाग्रहणं निपुणार्थमित्यपि केचित्।

(२१५) निमित्तमिहेति यदि तु कारणमित्युच्यते तदा अध्ययनेन वसति इत्यादावपि स्यादिति भावः। फलञ्च क्रियाफलमेव च फलं सप्तम्यर्थः। चर्मणीत्यादौ चर्मणः फलत्वञ्च हननस्य तल्लाभेच्छाधीनेच्छाविषयत्वात्। कर्मसम्बन्धश्च स्वरूपसम्बन्ध एव निमित्तम् तत्र द्वीपिचर्मसंयोग- [illegible]सीम्नोरवयवावयविभावात् समवायः इतरयोश्च संयोग इति विवेकः। मुक्ताफलाय करिणमित्यादौ क्रियार्थोपपदस्येत्यादिना (२८०पृ०) चतुर्थी मुक्ताफलमाहर्तुं हन्तीत्यर्थविवक्षणात्।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥

हेतौ तृतीयात प्राप्ता तन्निवारणार्थम्। सीमा अण्डकोशः पुष्कलको गन्धमृगः। योगविशेषे किम् वेतनेन धान्यं लुनाति।

## यस्य च भावेन भावलक्षणम्।२।३।३७।

यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी(२१६)स्यात्। गोषु दुह्यमानासु गतः। अर्हाणां कर्त्तृत्वेऽनर्हाणामकर्त्तृत्वे

---

(२१६)यस्येति भावः क्रिया यस्य भावेन भावस्य क्रियान्तरस्य लक्षणं परिच्छेदकरणं तद्वाचकशब्दात् चकारात् तद्विशेषणीभूतभावनाधकपदाच्च सप्तमीति सूत्रार्थः। तथाहि निर्ज्ञातकालादिक्रिया अनिर्ज्ञातकालादिक्रियायाः परिच्छेदकत्वात् लक्षणं भवति। तत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति यथा गोषु दुह्यमानास्वागत इति। काचिच्च स्वाधारकालाव्यवहितोत्तरकालेन यथा गोषु धोक्ष्यमाणास्वागत इत्यादौ काचित्तु स्वाधारकालाव्यवहितपूर्वकालेन यथा गोषु दुग्धास्वागत इत्यादौ। अत्र च क्रियासम्बन्धित्वस्य सर्वत्र कारके सत्त्वेऽपि साक्षात् क्रियाधारयोः कर्त्तृकर्मणोरेव ग्रहणं व्याख्यानादिति बोध्यम्। तथाच ज्ञापकत्वं सप्तम्यर्थस्तस्य क्रियायामेवान्वयः लक्ष्यलक्षणभावः शब्दगोध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तं न तु तस्य भूयोदर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति ध्येयम् अन्यथा उदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते। अतएव इदञ्च मानान्तरेण ज्ञातस्वरूपस्यार्थस्य कालविशेषादिज्ञापनार्थं यत्र शब्दप्रयोगस्तत्रैव प्रवर्त्तते इत्यत्रैव तात्पर्यं भाष्ये वर्णितम्।

तद्वैपरीत्ये (२१७) च *। सत्सु (२१८) तरत्सु असन्त आसते असत्सु तिष्ठत्सु सन्तस्तरन्ति। सत्सु तिष्ठत्सु असन्तस्तरन्ति। असत्सु तरत्सु सन्तस्तिष्ठन्ति।

## षष्ठी चानादरे (२१९)। २। ३। ३८।

अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः। रुदति रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रादिकमनादृत्य संन्यस्त (२२०) वानित्यर्थः।

---

(२१७) तद्वैपरीत्ये अर्हाणामकर्तृत्वेऽनर्हाणां कर्तृत्वे चेति द्वयं ग्राह्यम् तच्च चोदाहरणे वाक्यचतुष्टयम्। तथा च यस्यां क्रियायां ये उचितास्तेऽर्हाः तेषां कर्तृत्वे विवक्षिते सति तत्र सप्तमी वाच्या एवं यस्यां क्रियायां येषामनुचितं कर्तृत्वं तेषां कर्तृत्वे तयोरकर्तृत्वे च तथेत्यर्थः

(२१८) सत्स्वित्याद्यं सन्तो हि तरणक्रियार्हाः कर्तारश्च। असत्स्वित्यादि द्वितीयम् असतां तरणमनुचितं तत्कर्तृत्वञ्च तिष्ठत्स्वित्यनेनोच्यते। तृतीयं सत्सु तिष्ठत्स्विति। सतां तरणमुचितं तेषामकर्तृत्वं तिष्ठत्स्वित्यनेन गम्यते। चतुर्थम् असतां तरणमनुचितं तेषां कर्तृत्वञ्च तरत्स्विति द्रष्टव्यम्। बोधस्तु तरणक्रियाकर्तृसत्सम्बन्धि असत्कर्तृकमासनमित्येवं रीत्या सर्वत्रोह्यः।

(२१९) अनादरे इति विषयसप्तमी यस्य च भावेनेत्याद्यनुवर्त्तते तथा च यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तम्येव। अनादराधिक्ये अनादरे गम्यमाने सति तु षष्ठीसप्तम्याविति निष्कृष्टार्थः फलितः इत्थाऽनादराधिक्य इत्यादि। लक्ष्यलक्षणभावः षष्ठ्यादेरर्थः एतत्समभिव्याहारे अनादरपूर्वकत्वार्थे धातोर्लक्षणा षष्ठ्यादि तत्र तात्पर्यग्राहकम् अनादरश्च प्रत्यासत्त्या षष्ठ्यादिप्रकृत्यर्थविषय एव।

(२२०) प्राव्राजीदित्यत्र लक्षणत्वात्तया क्रियाप्राधान्येनैव बोधनियमेऽपि संन्यस्तवानितिविवरणं गुणप्रधानभावभेदेऽपि समानविषयत्वेन।

**स्वामीश्वराधिपति(२२१)दायादसाक्षिप्रतिभूप्रसूतैश्च। २। ३। ३९।**

एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः। षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम्। गवाङ्गोषु वा स्वामी। गवाङ्गोषु वा प्रसूतः गा एवानुभवितुञ्जात इत्यर्थः।

**आयुक्तकुशलाभ्याञ्चासेवायाम्। २। ३। ४०।**

आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्ये (२२२) ऽर्थे। आयुक्तो व्यापारितः। आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा। आसेवायां किम्? आयुक्तो गौः शकटे ईषद्युक्त इत्यर्थः।

**यतश्च निर्धारणम्। २। ३। ४१।**

जातिगुणक्रियासंज्ञाभिः (२२३) समुदायादेकदेशस्य पृथक्करणं

---

(२२१) स्वाम्यर्थेति वक्तव्ये स्वाम्यादिशब्दद्वयग्रहणं पर्यायशब्दान्तरनिवारणार्थम्।

(२२२) तात्पर्ये इति तात्पर्यं तत्परत्वं कर्मणि रतिरिति भावः. तात्पर्यञ्च तदेकव्यापारता।

(२२३) जातिगुणक्रियासंज्ञाभिरिति विशेषणे तृतीया। समुदायश्च समुदाय एकदेशे च तथा च जात्यादिविशिष्टस्यैकदेशस्य यतः स्वघटितजात्यादिविशिष्टसमुदायात् निर्धारणं पृथक्करणं स्वेतरसमुदायव्यावृत्तधर्मकरणकं पृथक्करणं तद्वाचकात् षष्ठीसप्तम्यौ स्त इत्यर्थः। यत इति किम् यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मेणावबोधनं तत एव मा भूत् षष्ठ्यपवादत्ववत् प्रथमापवादत्वस्यापि सम्भवात्। तथा च स्वघटितसमुदायविभक्तस्वेतरसमुदायव्यावृत्तधर्मकरणकपृथक्करणरूपनिर्धारण-

यतस्ततः षष्ठीसप्तम्यौ स्तः । नृणां (२२४) नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा बहुक्षीरा । गच्छतां गच्छत्सु वा धावन् शीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः ।

**पञ्चमी विभक्ते । २ । ३ । ४० ।**

विभागो विभक्तं निर्धार्यमाणस्य यत्र भेद एव (२२५) तत्र पञ्चमी स्यात् । माथुराः पाटलिपुत्रेभ्य आढ्यतराः ।

---

विषयत्वरूपोऽवयवावयविभावरूपश्च सम्बन्धो विभक्त्यर्थः । शब्देन्दु० ।

(२२४) नृणामिति नृसमुदायावधिकविप्रेतरव्यावृत्त श्रेष्ठत्वकरणकपृथक्करणरूपनिर्धारणविषयो नृसमुदायावयवो विप्रः श्रेष्ठ इति बोधः संसर्गघटककरणस्य समभिव्याहृतश्रेष्ठत्वादिकमेव ग्राह्यम् । उद्भूतावयवभेदविवक्षया नृणामिति बहुवचनं तिरोहितावयवभेदविवक्षायामेकवचनं तच्चासाधु इति कारके इति सूत्रभाष्ये स्पष्टम् । कारके इत्यत्र निर्धारणे सप्तम्यां कारकेष्विति ब्रूयादिति हि तदाशयः । द्वन्द्वः सामासिकस्य चेत्यादौ समूहार्थे ठक् समाससमूहमध्ये इत्यर्थ इति बोध्यम् । शब्देन्दु० ।

(२२५) यतश्च निर्धारणमित्यनुवर्तते विभागोऽत्र भेदः तत्र निर्धारणे सर्वत्र यथाकथञ्चित् भेदस्य सत्त्वेऽपि विभक्तपदसामर्थ्यात् यत्र भेद एव न तु कौमार्यपाण्ड्यादिरूपेणाभेदस्तत्रैवास्य प्रवृत्तिरित्याह भेद एवेति न तु शब्दान्तरोपात्तसामान्याक्रान्ततेति भावः । पञ्चम्यर्थो निर्धारणविषयत्वरूप एव तत्र च अवधिमत्त्वसम्बन्धेन पाटलिपुत्रस्यान्वयः तेन पाटलिपुत्रावधिकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः । न ह्यत्र निर्धारणावधेर्निर्धार्यमाणस्य च गोषु कृष्णेत्यादाविव सामान्यविशेषभावोऽस्ति प्रत्युत शब्दोपात्तयोर्धर्मयोर्विरोध एव ।

## साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः। २।३।४३।

आभ्यां योगे सप्तमी स्यादर्चायां न तु प्रतेः प्रयोगे (२२६) मातरि साधुर्निपुणो वा। अर्चायाङ्किम्। निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्य्यम्। अप्रत्यादिभिरिति(२२७) वक्तव्यम्*। साधुर्निपुणो वा मातरं प्रति पर्य्यनु वा।

## प्रसितोत्सुकाभ्यान्तृतीया च। २। ३। ४४।

आभ्यां योगे तृतीया स्याच्चात्सप्तमी। प्रसितः(२२८)उत्सुको वा हरिणा हरौ वा।

## नक्षत्रे च लुपि। २। ३। ४५।

नक्षत्रे प्रकृत्यर्थे यो लुप् तया लुप्यमानस्य प्रत्ययस्यार्थे तत्र वर्त्तमाने तृतीयासप्तम्यौ स्तोऽधिकरणे(२२९)। मूलेना(२३०) वाहयेद्देवीं श्रवणेन विसर्जयेत्। मूले श्रवणे इति वा। लुपि किम् पुष्ये शनिः।

---

(२२६) साधुशब्दप्रयोगे तु अर्चां विनापि सप्तमी भवत्येवेति "साध्वसाधुप्रयोगे चेति" वार्त्तिकादित्युक्तम् (२०८पृ०)। प्राक्

(२२७) अप्रत्यादीत्यादिना लक्षणेत्थम्भूतेत्यादिसूत्रोपात्तार्थौ पर्य्यनू ग्राह्यौ।

(२२८) "तत्परे प्रसितासक्तौ" इत्युक्तेरुत्सुकशब्दपर्य्यायोऽत्रासक्तार्थक एव प्रसितो गृह्यते न तु प्रकर्षेण सितः शुभ्रः प्रसित इत्यर्थोऽपीति बोध्यम्।

(२२९) अधिकरणे इत्यस्यानुवृत्तिः किम् अद्य पुष्य इत्यादौ मा भूत् अननुवर्त्तने प्रातिपदिकार्थे एव स्यात्।

(२३०) मूलेनेति नक्षत्रे च लुपः काल(५२४पृ०) इत्यस्य लुबविशेषे (५२४पृ०) इति लुप्।

**सप्तमीपञ्चम्यौ कारकमध्ये। २। ३। ७।**

शक्तिद्वयमध्ये (२२१) यौ कालाध्वानौ ताभ्यामेते स्तः। अद्य भुक्त्वायं द्व्यहे द्व्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्येऽयं कालः। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। कर्तृकर्मशक्त्यो-र्मध्येऽयं देशः। अधिकशब्देन (२२२) योगे सप्तमीपञ्च-म्याविष्येते तदस्मिन्नधिकमिति (१६६४०) यस्मादधिकमिति च सूत्रनिर्देशात्। लोके लोकाद्वाधिको हरिः।

**अधिरीश्वरे। १। ४। ९७।**

स्वस्वामिसम्बन्धेऽधिः कर्मप्रवचनीयसंज्ञः स्यात्।

**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी। २। ३। ९।**

---

(२२१) कालाध्वनोरत्यन्तसंयोगे (२६८४०) इत्यतः कालाध्वनोरित्यनुवर्त्तते तत्र पञ्चम्या विपरिणाम्यते मध्यशब्दस्य शक्तिद्वयसापेक्षतया षष्ठीद्विवचना-न्तेन समासः कर्तृरूपकारकस्यैकत्वे भेदनिबन्धनमध्यव्यपदेशासम्भवात् कारकशब्देन तच्छक्तिर्लक्ष्यते तत्सर्वं मनसि कृत्वाह शक्तिद्वयमध्ये इत्यादि। तथा च कर्तृत्वादिशक्तिरेव कारकं सा च क्रियाभेदेन भिद्यतेति भावः। अवध्यवधिमतोः सजातीययोरेव सापेक्षत्वनियमेन कालाध्वनोः शक्तिमध्ये प्रवेशासम्भवेऽपि शक्तिशब्दस्य तदाधारकाला-दिपरतया तन्मध्ये प्रवेश इति द्रष्टव्यम् [illegible] विभक्त्यर्थः शक्तिद्वयमध्यवर्त्तित्वं स्वार्थिकमिति बोध्यम्।

(२२२) अधिकशब्देनेति कर्तृक्तप्रत्ययान्ताध्याहृतस्य समानार्थकेनाधिकश-

अत्र कर्म्मप्रवचनीययुक्ते सप्तमी स्यात् । उप परार्द्धे (२३३) हरेर्गुणाः परार्द्धादधिका इत्यर्थः । ऐश्वर्य्ये तु स्वस्वामिभ्या-म्पर्य्यायेण सप्तमी । अधि भुवि रामः अधि रामे भूः । सप्तमी शौण्डै(३५।पृ०पृ०) रिति समासपक्ष(२३४)तु रामाधीना । अषडक्षेत्यादिना (७१८पृ०) खः ।

## विभाषा कृञि । १ । ४ । ९८ ।

अधिः करतौ प्राक्संज्ञो वा स्यादीश्वरार्थे । यदत्र मामधिकरिष्यति (२३५) विनियोक्ष्यत इत्यर्थः । इह विनियोक्तु-

---

क्तेन, न तु कर्मक्तप्रत्ययान्ताध्याहृतस्य समासार्थकेन, तेन । लोकेऽधिको हरिरित्यादौ लोके इत्यत्रैव हर्यादेर्न सप्तम्यादिरिति बोध्यम् ।

(२३३) उप परार्द्धे इति उपोऽधिके चेति (२६४पृ०) कर्मप्रवचनीयसंज्ञा ।

अधिरीश्वरे इत्यत्र (२१४पृ०) यस्येश्वरवचनमित्यत्र (२१४पृ०) चोभयत्रापीश्वरशब्दो ईश्वरत्वेश्वरोभयपरो ततश्च यस्येत्यनेन यत्सम्बन्धि धनादिकं निर्द्दिश्यते तस्मात् ईश्वरवाचकात् सप्तमी, यस्य च धनादेः स्वामित्वं निर्द्दिश्यते तस्मादपि धनादिवाचकात् सप्तमीति सूत्रार्थः । तत्र पर्य्यायेण भवतीत्याह ऐश्वर्य्ये तु स्वस्वामिभ्यां पर्य्यायेण सप्तमीति । अन्यतरस्मादुत्पन्नयैव सप्तम्या इतरनिष्ठसम्बन्धस्याप्यभिधानात् उक्तार्थानामप्रयोग इति न्यायात् न युगपदुभाभ्यां सप्तमीति भावः ।

(२३४) समासपक्षे इति विभक्त्यर्थेऽव्ययीभावे तु अधिराममिति स्यादेवेति द्योतनाय तुशब्दः ।

(२३५) यो मामधिकरिष्यति विनियोक्ष्यते तस्य विनियोक्तुरीश्वरत्वं गम्यत इत्यर्थः ।

दीश्वरत्वङ्गम्यते । अगतित्वात्तिङि चोदात्तवतीति (७६१२पृ०) (२३६) निघातो न ।

। सप्तमी ।

इति विभक्त्यर्थाः ।

---

(२३६) तिङि चोदात्तेति उदात्तवति तिङि परे गतिर्निहन्यत इति सूत्रार्थः अत्र च करिष्यतीति तिङन्त उदात्तवान् तत्परेऽभेर्न निघातः । तिङतिङः इत्यस्य (७६१२पृ०) तु निपातैर्यद्यदित्यादिना (७६१२पृ०) निषेधादनिघात इत्यर्थः मामित्यत्र द्वितीया तु कर्म्मणि द्वितीयेत्यनेनैव (२५०पृ०) सिद्धेति भावः ।

## समर्थः (१) पदविधिः । २ । १ । १ ।

(१) समर्थः पदविधिरिति । समर्थः संबद्धार्थः सङ्गतार्थ इति यावत् ।
सामर्थ्यञ्च द्विविधम् व्यपेक्षावत्त्वमेकार्थीभावश्च । तत्र स्वार्थपर्य्यवसा-
यिपदानामाकाङ्क्षादिवशात् यः परस्परं सम्बन्धः सा व्यपेक्षा । राज्ञः
पुरुष इत्यादौ वाक्ये सत्यामाकाङ्क्षायां यो यो यस्मिन् सन्निहितो
योग्यश्च स तेन तेन सम्बध्यते यथा राज्ञः पुरुषोऽश्वश्च राज्ञो देवद-
त्तस्य च पुरुषः ऋद्धस्य राज्ञोऽश्वो भवत्वित्यादि वृत्तौ तु नैवम् वृत्ती-
नामेकार्थीभावात् । एकार्थीभावश्च विशेष्यविशेषणभावावगाह्ये-
कोपस्थितिजनकत्वम् । तथा च राजपुरुषादिशब्देन विशिष्टैकार्थ-
बोधकतया न तदेकदेशे ऋद्धादेरन्वयः पुरुषांशे विशेषणतयोपस्थित-
स्य च मान्यादिसम्बन्धिता राजादीनाम् । अनिताव्ययाश्च निराकाङ्क्ष-
तया न देवदत्तादेः स्वामितया पुरुषादावन्वय इति द्रष्टव्यम् ।
देवदत्तस्य गुरुकुलमित्यादौ देवदत्तादेस्तु प्रधानीभूतकुलादिनैवान्वयः
सम्बन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः यथोक्तं हरिणा

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सहेति ।

यद्वा सम्बन्धिशब्दार्थस्य पदार्थैकदेशत्वेऽपि भवत्येव तेषामपि सम्ब-
न्धान्वयः तदुक्तं तेनैव

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत् सा व्यपेक्षापि वृत्तावपि न हीयते ।

अतएव वार्त्तिककृता सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न
प्रयुज्यते इति वक्तव्यमिति सामान्यतो वृत्तिमतो विशेषणस्य स्वात-
न्त्र्येण प्रयोगाभावमभिधाय अगुरुकुलपुत्रादीनां वक्तव्यमित्य-
नेन गुरुकुलगुरुपुत्रादीनां विशेषणत्वेऽपि पृथक्प्रयोगाय नञा
समुदायः कृतः । समानाधिकरणविशेषणस्य तु समानाधिकरण-
समर्थसङ्गतीत्वेन सर्वथा स्वातन्त्र्येण सामर्थ्याभावात् प्रयोगा-
भावः भङ्ग्याऽभिहितः । एतत्सूचनैव प्राचां गाथा

सापेक्षे प्रत्ययो न स्यात् समासो वा कथञ्चन ।
सापेक्षं तद्विजानीयादसमस्तविशेषणम् ।
प्रतियोगिपदादन्यत् यदन्यत् कारकादपि ।
वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते इति

अत्रायं विशेषः भवति प्रधानस्य सापेक्षत्वेऽपि समास इत्युक्तेः प्रधानस्य वृत्त्युपस्थाप्यविशेष्यस्य राजपुरुषादेः सुन्दरादिविशेषणापेक्षायामपि समासः । समासे चावयवशक्त्यैव तत्तत्पदार्थोपस्थित्या विशेष्यविशेषणभावाद्यभ्युपगमे सापेक्षत्वादौ समासाभावादिकं वाचनिकं कल्प्यम् तथाच्याप्यधिककल्पना स्यादतः समुदायशक्तिकल्पनम् यथोक्तं हरिणा

बहूनां वृत्तिधर्माणां वचनैरेव साधने ।
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ।
चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्त्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितमिति ।

तथाहि द्वन्द्वादिविग्रहवाक्ये चकारादि प्रयुज्यते समस्ते तु न तत्र वचनैरेव तन्निषेधः कल्पनीयः समुदायशक्तिपक्षे तु उक्तार्थानामप्रयोग इत्युक्तन्यायादेव सिद्धम् । नामार्थयोरभेदान्वयः क्लृप्तः स च राजपदादुपस्थापितराजादेः पुरुषे स्वस्वामिभावसम्बन्धेनान्वये परित्यक्तः स्यात् । सम्बन्धलक्षणायान्तु किमपराद्धम् विशिष्टलक्षणया । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थः प्रधानमिति नियमश्च क्लृप्तः स च ग्रामानन्दादौ भज्येत आनन्दकर्तृकप्राप्तिकर्मेत्यर्थबोधस्योभयसम्मतत्वेन कर्तृविहितक्तान्तार्थस्य कर्त्तुर्विशेष्यतौचित्येन प्रकृते तद्वैपरीत्यात् आनन्दसम्बन्धादिलक्षणास्वीकारे समुदायशक्तिपक्ष एव प्रवेशः । तथा प्राप्त आनन्दो यमिति विग्रहे आनन्दादौ अत्यन्तादिविशेषणयोगवत् समासे तद्वारणाय इष्टस्य न विशेषणयोग इति वाचनिकत्वकल्पनाऽधिका एतन्मते, मम तु न्यायसिद्धा इत्यादिबहुविस्तरापत्तिरतः समुदाये शक्तिरित्यन्यत्र विस्तरः । वार्त्तिककृता तु अवश्यं कश्चित् नञ्पदस्याऽसामर्थ्यसमासस्य गमकस्य साधुत्वं वक्तव्यमित्युक्तत्वात् असूर्यं पश्यादौ

पदसम्बन्धी यो (२) विधिः स समर्थाश्रितो बोध्यः।

**प्राक् (३) कडारात्समासः। २। १। ३।**

कडाराः कर्मधारय इत्यतः (१६५ पृ०) प्राक् समास इत्यधिक्रियते।

**सह सुपा। २। १। ४।**

सहेति योगो (४) विभज्यते। सुबन्तं समर्थेन सह समस्यते। योगविभागस्येष्टसिद्ध्यर्थत्वात् (५) कतिपयतिङन्तोत्तरपदोऽयं

---

असमर्थेन नञा वाक्येन कृतमारीचो राम इत्यादौ वाक्यादेर्विवक्षार्थस्य गमकत्वे सापेक्षत्वेऽपि तदर्थबोधकतयैव समास इति दृष्टव्यम्।

(२) पदस्य पदयोः पदानां वा विधिः पदविधिरिति वचनविशेषाविवक्षितत्वं द्योतयन्नाह पदसम्बन्धीति। तत्र पदेति किम् वर्णाश्रये कार्येऽसमर्थेऽपि यथा स्यात् तथा च तिष्ठतु दधि आनयाशनमित्यत्र दध्यानयेति पदयोः सामर्थ्याभावेऽपि वर्णाश्रयं यणादिकं भवत्येव। सूत्रे समर्थपदं सामर्थ्यविशिष्टमिति द्योतयन्नाह समर्थाश्रित इति समर्थेति किं पश्यति कृष्णं श्रितो राममित्यादौ समासो मा भूत् तथा कृष्णस्य अपत्यं देवदत्तस्येत्यादौ च मा भूत् कृष्णशब्दादपत्यार्थकस्तद्धितः। इयञ्च परिभाषा समासकृत्तद्धितादिविधिमात्रे प्रवर्त्तते इति बोध्यम्।

(३) प्राक् कडारादिति सूत्रे प्राक् पदमावर्त्तनीयं तेन पूर्वं समाससंज्ञा ततोऽवान्तरसमाससंज्ञा भवतीत्यर्थः। एवञ्चाव्ययीभावादेः समासेन इति भावः। अनेकपदानामेकीभवनं समास इति निष्कृष्टार्थः।

(४) सहेति सूत्रं समासविधानार्थमधिकारार्थञ्च तथा च अत्र सूत्रे सहेति सुपेति च पदद्वयमधिकरिष्यमाणं बोध्यम्। अत्र सहेति योगो विभज्यते सुपामन्त्रिते (७५४० पृ०) इत्यतश्च सुपित्यनुवर्त्तते तथा च सुबन्तं समर्थेन सह समस्यते इति प्रथमयोगार्थः। तेन समर्थेन सुबन्तेन तिङन्तेन नाम्ना धातुना सुपा च समास इत्यर्थः सम्पद्यते। तत्राद्यं भूतपूर्वं, द्वितीयमनुव्यचलत्, तृतीयं पुत्रहती, गतिकारकोप-

समासः स च छन्दस्येव(६)पर्य्यभूषयत्(७)। अनुव्यचलत्। सुपा सह(८)समस्यते। समासत्वात्प्रातिपदिकत्वम्।

## सुपोधातुप्रातिपदिकयोः।२।४।७१।

एतयोरवयवस्य सुपो लुक् स्यात्। भूतपूर्वे चरडिति (६८८पृ०)

---

महतां कष्टिः सह समासवचनं प्राक्सुबुत्पत्तेरित्युक्ते(१७८पृ०)र्नाम्नैवात्र समासः। वस्त्रार्थम् कटप्रूरित्यादि। समर्थः समर्थेन सह समस्यते इति द्वितीययोगार्थः तेन तिङन्तेन समर्थेन समर्थतिङन्तस्य समासः यथा पिबतखादता अश्नीतपिबतेत्यादि। तिङन्तस्य सुबन्तेन समर्थेन च समासो यथा एहीडादयः। स्फुटी भविष्यति तत्तत्प्रकरणे चेदं सुपरिष्टात् (४५०पृ०)। यथा च योगविभागेनोक्तषड्विधसमासलाभस्तथा हरिणोक्तम्

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।
सुबन्तेनेति च प्रोक्तः समासः षड्विधो बुधैरिति।

इत्येतन्मतमपि निपातोऽत्र सहेति योगो विभज्यते इति योगो योजनमन्वयबोधोपयोग्याकाङ्क्षितपरिकल्पनमिति यावत् विभज्यते भेद्यते विशिष्यते अवान्तरानुपूर्वीविशेषेण भिन्नतया कल्प्यते इत्यर्थः एवं सर्वत्र योगविभागार्थ उन्नेयः।

(५) इष्टविपर्ययत्वादिति तेन लोकं करोति नाहः अरतीत्यादौ न विशेषणषष्ठीसमासाविति बोध्यम्।

(६) छन्दस्येवेति तेन लौकिके नोपसर्गस्य तिङन्तेन समासस्तथात्वे प्रकुरुते इत्यादौ कृत्तद्धितसमासाश्चेत्यनेन (८४पृ०)प्रातिपदिकसंज्ञाविधानात् ततः सुबाद्यापत्तिः नपुंसकत्वेन ह्रस्वोनपुंसक इति(१४२पृ०)लुक्समर्थनेऽपि सुबापत्तिः प्राकुर्वन्नित्यादौ नचोपापत्तिश्चेति दूषणमावहतीति बोध्यम्।

(७) पर्य्यभूषयदित्यादौ वेदे स्वरविशेषार्थम् समासाङ्गीकारः सुपो नपुंसक इत्यादिना (१४२पृ०)।

(८)आद्ययोगव्याख्यानमनूद्य सहार्थं संयोज्य आवर्त्य सुपा सह समस्यत इति

निर्देशात्पूर्वनिपातः । पूर्व्वं भूतः भूतपूर्व्वः । इवेन समासे विभक्त्यलोपश्च* (९) । जीमूतस्येव ।

**अव्ययीभावः (१०) । २ । १ । ५ ।**

अधिकारोऽयम् ।

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु । २ । १ । ६ ।**

अव्ययमिति योगो (११) विभज्यते । अव्ययं समर्थेन सह समस्यते सोऽव्ययीभावः ।

**प्रथमानिर्द्दिष्टं समास उपसर्ज्जनम् । १ । २ । ४३ ।**

समासशास्त्रे (१२) प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ।

---

(९) इवेनेति इवेन समासे विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्चेति वार्त्तिकोक्त स्वरार्थमेवेदम् । समासमध्यपातित्वात् सुपोऽनेन लोपनिषेधः समासान्तःपतितसुपस्तु अस्याव्ययान्तत्वेनोपसर्जनत्वेन चाव्ययत्वादेव लुगिति बोध्यम् ।

(१०) न व्ययमव्ययं भवतीति भवतेः कर्त्तरि अः । इदञ्च सूत्रं संज्ञार्थमधिकारार्थञ्च ।

(११) योगो विभज्यते इति तेन अपदिशमित्यादिसिद्धिः । सामीप्यादयस्तु उदाहरणावसरे यथावसरं व्याख्यास्यन्ते (१२१५०) ।

(१२) सूत्रे समासपदं समासविधायकशास्त्रपरमन्यथा कष्टं श्रित इत्यादौ विग्रहे श्रितादिपदानामेव प्रथमान्ततया पूर्वनिपातापत्तिरित्याशयेनाह समासशास्त्रे इति ।

**उपसर्ज्जनं पूर्वम्(१३) । २ । २ । ३० ।**

उपसर्जनम्प्राक् प्रयोज्यम् ।

**एकविभक्ति चापूर्वनिपाते । १ । २ । ४४ ।**

विग्रहे (१४) यन्नियतविभक्तिकन्तदुपसर्जनसंज्ञं स्यात् । न तु तस्य पूर्वनिपातः (१५) ।

**गोस्त्रियोरुपसर्जनस्य । १ । २ । ४८ ।**

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तञ्च(१६)तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अव्ययीभावश्चेति(२०४४०)अव्ययत्वम् ।

**नाव्ययीभावादतोऽम् त्वपञ्चम्याः । २ । ४ ।८३**

---

(१३) पूर्वमिति अप्रधानमुपसर्ज्जनमिति शास्त्रान्तरैकवाक्यतया यं प्रति यदुपसर्ज्जनं तस्मात् पूर्वस्मिन् प्रयोज्यमित्यर्थः ।

(१४) विग्रह इति अनुवर्त्तमानेन समासपदेन विग्रहो लक्ष्यते इति भावः

(१५) न तु तस्येति अनन्तरोक्तः पूर्वनिपातोऽनेन न निषिध्यते किन्तु ह्रस्वाद्यर्थमिदं सूत्रमिति भावः। निष्कान्तः निष्कान्तेत्यादिक्रमेण निष्का-न्तादिशब्दस्यानियतविभक्तिकत्वेऽपि कौशाम्बीशब्दस्य नियतविभक्तिकतयोपसर्जनत्वात् निष्कौशाम्बिरित्यत्र ह्रस्व इति बोध्यम् ।

(१६) गोस्त्रियोरिति उपसर्ज्जनमिह शास्त्रीयं ग्राह्यं न त्वप्रधानमात्रं तेन कुमारीवाचरति श्यन् इत्यादिवाक्ये आचारक्रियायां कुमारीशब्दे न प्रवृत्तः । अत्र स्त्रीशब्दस्य स्त्र्यधिकारोक्तटाबादिप्रत्ययान्तपरतयाऽतिलक्ष्मीरित्यादौ नेत्याशयेनाह स्त्रीप्रत्ययान्तस्येति । भाष्ये उत्तरपद भूतयोः गोस्त्रियोरित्यभिधानात् समासान्त एवेदं प्रवर्त्तते तेन राजकुमारीपुत्र इत्यादौ समासमध्ये नेति बोध्यम् ।

अदन्तादव्ययीभावात्सुपो न लुक् तस्य तु पञ्चमीं विना अमादेशश्च स्यात् (१७)। दिशयोर्मध्यमपदिशम्। क्लीवाव्ययं त्वपदिशं दिशोर्मध्यं विदिक् स्त्रियामित्यमरः।

**तृतीयासप्तम्योर्बहुलम्। २। ४। ८४।**

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात्। अपदिशम् अपदिशेन। अपदिशम् अपदिशे। बहुलग्रहणात् सुमद्रमुन्मत्तगङ्गमित्यादौ सप्तम्या नित्यमम्भावः। विभक्तीत्यादे(१८)रयमर्थः। विभक्त्यर्थादिषु वर्त्तमानमव्ययं सुबन्तेन सह समस्यते सोऽव्ययीभावः। विभक्तौ तावत्। हरौ(१९) इत्यधिहरि। सप्तम्यर्थस्यैवात्र द्योतकोऽधिः। हरि ङि अधि इत्यलौकिकं विग्रहवाक्यम्। अत्र निपातेनाभिहितेऽप्यधिकरणे वचन (२०) सामर्थ्यात्सप्तमी।

**अव्ययीभावश्च। २। ४। १८।**

---

(१७) नाव्ययीभावादिति अत्रापसुप इति प्रतिषेधोऽयं एव न तु लुक् इति द्योतयितुं सुपश्च। तथा च अदन्तादव्ययीभावात् परस्य पञ्चमीभिन्नस्य सुपो लुक् न अम् च पञ्चम्यास्तु लुगमावुभावपि नेत्यर्थः।

(१८) अव्ययं विभक्तीत्यादिसूत्रे विभक्त्यादिशब्देन तदर्थो लक्ष्यते वचनग्रहणन्तु कर्मसाधनं प्रत्येकं सम्बध्यते तेन विभक्त्यादिरूपार्थाभिधायकत्व वर्त्तमानं तदर्थद्योतकमव्ययं समर्थेन सुबन्तेन सह समस्यते इति फलितार्थस्तदाह द्योतकमव्ययं समर्थेन सुबन्तेन सह समस्यते इति फलितार्थस्तदाह विभक्त्यादिष्विति। अत्र च तदुत्तरविभक्त्यर्थोद्यन्तर्भावेनैवैकार्थीभावः।

(१९) नित्यसमासेऽस्वपदघटितवाक्यस्यैव विग्रहस्योचितत्वात् हरौ अधीत्यपहाय हर्यादिरुक्तम्।

(२०) वचनेति सूत्रे वचनेत्यस्य तदर्थपरतया प्रत्यासत्त्या अविभक्त्यर्थवाचका- [illegible] भावः।

अयं नपुंसकं स्यात् । ह्रस्वो नपुंसके प्रातिपदिकस्य (१४२पृ०) । गोपायतीति गाः पातीति वा गोपाः तस्मिन्नित्यधिगोपम् । समीपे । कृष्णस्य समीपमुपकृष्णम् । समया (२१) ग्रामम् निकषा लङ्काम् आराद्वनादित्यत्र तु नाव्ययीभावः अभितः परित इति (२६२पृ०)अन्यारादिति(२८८पृ०)द्वितीयापञ्चम्यो-र्विधानसामर्थ्यात् । मद्राणां समृद्धिः सु(२२)मद्रम् । यवनानां व्यृद्धिः दुर्यवनम् । विगता ऋद्धिः (२३) व्यृद्धिः । मक्षि-काणामभावो (२४) निर्मक्षिकम् ।

---

(२१) समयानिकषाराच्छब्दा अभिकरणशक्तिप्रधाना इति तेषां सामीप्यमा-त्रवाचित्वाभावान्न तैः समासः तेषां हि समीपे इत्यर्थकताविभक्त्यर्थसा-मीप्यादिमात्रस्याव्ययस्यैव सुबन्तेन समासः प्रकृते तूपशब्दस्तन्मात्र-वाची कृष्णसामीप्यमिति बोधादिति नातिप्रसङ्गः । उपकृष्णादौ तूपस्य समीपवर्त्तिपदार्थबोधकतया सामीप्यमात्रवाचित्वाभावान्ना-व्ययीभावः ।

(२२) वचनग्रहणात् समृद्ध्यादिद्योतकत्वेऽव्ययीभावः सुशब्दस्तत्र समृद्ध्या-दिद्योतकः ।

(२३) विगता ऋद्धिरित्यस्य ऋद्धेरभाव एवेत्यर्थस्तस्य नार्थाभावरूपत्वम् तद-द्धेरेव तत्प्रतियोगित्वात् बोधस्तु यवननिष्ठर्द्धिप्रतियोगिकाभाव इति न गतार्थता ।

(२४) अर्थविरोधी अभावः अर्थाभावः अत्यन्ताभावः एव अन्योन्याभावस्य तु सर्वत्र प्रतियोगितावच्छेदकेनैव विरोधादित्याशयेन सूत्रेऽर्थपद-मुपात्तम् अयञ्च समास उत्तरपदार्थाभावद्योतकः नञनञ्साधारणा-व्ययेन भवति । नञ्तत्पुरुषस्तु नञैव अन्योन्याभावबोधकः सर्वत्र कश्चिदभावबोधकोऽपीत्यनयोर्विशेषः । अतएव निर्मक्षिकम् अपाप-मित्यादिवत् अनुपकृष्ण इत्यादीनामभावबोधकत्वेऽपि न क्षतिः । वस्तुतो नाशपर्यायाव्ययस्य पृथग्ग्रहणात् प्रागभावनिवारणार्थं विद्यमानपदार्थप्रतियोगिताद्योतनार्थमर्थग्रहणं तेन प्रागभावाभि-

हिमस्यात्ययो निर्हिमम् (२५)। अत्ययो ध्वंसः। निद्रा सम्प्रति (२६) न युज्यते इत्यतिनिद्रम्। हरिशब्दस्य (२७) प्रकाशः इतिहरि। विष्णोः पश्चादनुविष्णु। पश्चाच्छब्दस्य तु नायं समासः ततः पश्चात् (२८) स्रंस्यत इति भाष्यप्रयोगात्। योग्यता (२९) वीप्सापदार्थानतिवृत्तिसादृश्यानि य-

---

प्रायेण कपालेऽघटमित्यादिर्न प्रयोगः न वाऽपदार्थस्य शशशृङ्गादेर-भावबोधनाय निःशशशृङ्गमित्यादिरेवमनौकतया, र्थत्वाभावेन तत्प्रतियोगिकाभावाप्रसिद्धेः।

(२५) अतेरतिशयार्थत्वात् ध्वंसार्थत्वाभावेनातिहिममित्यनुक्त्वा निर्हिममित्युक्तम्।

(२६) सम्प्रतिशब्द इदानीमित्यर्थे स चाधिकरणशक्तिप्रधानत्वात् क्रियापदेनैवान्वयी तद्विशेषोऽपि तदान्वितक्रियाया नवोचित इत्याशयेनाह सम्प्रति न युज्यते इति तेनात्यन्तीति सौत्रप्रयोगेऽपि युजिक्रियान्तर्भावेणैव नञ्समास इति बोध्यम्।

(२७) शब्दप्रादुर्भाव इत्यस्य शब्दविषयकप्रकाशार्थेनाव्ययेन समास इतिना। उदाहरणे स्वरूपपरेण हरिशब्देन प्रकाशार्थकेतिशब्दस्य समासः।

(२८) सति च पश्चाच्छब्देनाव्ययीभावे पश्चाच्छब्दस्य पूर्वनिपातः स्यादित्यपि द्रष्टव्यं तेन सर्वपश्चादिति न भाष्यप्रयोगासङ्गतिः। एतद्भाष्यप्रयोगादेवैतदुच्यते तत्तदर्थबोधकपदघटिततया स्वीताव्ययेन तत्तदर्थकेन न समास इति गम्यते तत्र च पश्चाच्छब्दस्यैव स्वार्थपरस्याव्ययस्य घटकत्वाभावाव्ययीभाव इति बोध्यम्।

(२९) यथापदं व्याचष्टे योग्यतेत्यादि पदार्थानतिवृत्तिरतिक्रमः। प्रतिशब्दमिति वृत्तौ वीप्सान्तर्भावात् न द्विर्वचनम्। तथा च यदा द्विर्वचनं तदा प्रतिशब्दस्य वीप्साबोधकत्वाभावात् समासाप्राप्त्या वाक्यं साधु। वृत्तौ तु समासेन वीप्साया द्योतितत्वात् उक्तार्थानामप्रयोग इति न द्विर्वचनमिति बोध्यम्।

थार्थाः। अनुरूपम् रूपस्य योग्यमित्यर्थः। अर्थमर्थम्प्रति-प्रत्यर्थम् प्रतिशब्दस्य वीप्सायाङ्कर्मप्रवचनीयसंज्ञाविधान-सामर्थ्यात्तद्योगे द्वितीयागर्भं वाक्यमपि। शक्तिमनति-क्रम्य (२०) यथाशक्ति। हरेः सादृश्यं सहरि। वक्ष्यमाणेन सहस्य सः। ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् (२१)। चक्रेण युगपदिति विग्रहे।

## अव्ययीभावे चाकाले। ६।३।८१।

सहस्य सः स्यादव्ययीभावे न तु काले। सचक्रम्। काले तु सहपूर्व्वाह्णम्। सदृशः सख्या ससखि। यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि(२२)सादृश्ये यथा स्यादित्येव-मर्थम्। क्षत्राणां सम्पत्ति, सक्षत्रम्। ऋद्धेराधिक्यम् (२३)

---

(२०) शक्तिमनतिक्रम्येति परावरयोगे चेति(३।४।२०)सूत्रेण परेण पूर्वस्यावरेण परस्य च योगे गम्यमाने क्त्वा स्यादित्यर्थकेन क्त्वाप्रत्ययः परावरयोगश्चात्र धौव्येन गम्यमाने इत्युक्तत्वादप्राक्कालत्वेऽपि न क्षतिः।

(२१) आनुपूर्व्यं क्रियाकृतम् अनुज्येष्ठं प्रविशन्तीत्यादौ कर्तृत्वेनाभ्युपगमात् परिनिष्ठितविभक्त्या समासमभिप्रेत्याह ज्येष्ठस्यानुपूर्व्येणेति आनुपूर्व्य-क्रमः पूर्वं अन्येषामनुपूर्वं स्वार्थे ष्यञ् आनुपूर्व्यम्। अत्र सूत्रे आनुपूर्व्यमिति निर्देशात् एतदर्थकतया व्युत्पत्तेनाप्यनुना। अव्ययेन समास एव। युगपदादिशब्दयोगे तु न समासः तेनानुपूर्व्यमितिवद् युग-पन्नाम्नेत्यादिर्न प्रयोग इति द्रष्टव्यम्।

(२२) गुणभूते इति आख्यातादिवाच्यविशेष्यं यदि सादृश्ये इति नोच्येत तर्हि यत्र सादृश्यं प्रधानतयावगम्यते तत्रैव स्यात् अव्ययीभावेऽव्ययार्थप्रा-धान्यस्यौत्सर्गिकत्वादिति भावः।

समृद्धिः। अनुरूप (३४) आत्मभावः सम्पत्तिरिति भेदः। तृणमप्यपरित्यज्य (३५) सतृणमत्ति साकल्येनेत्यर्थः। (३६) अन्ते (३७)। अग्निग्रन्थपर्यन्तमधीते साग्नि।

**यथाऽसादृश्ये ।२।१।७।**

असादृश्ये (३८) एव यथाशब्दः समस्यते। तेनेह न। यथा

---

(३४) अनुरूपो योग्य आत्मनः समस्यमानोत्तरपदस्य भावः प्रवृत्तिनिमित्तं तद्वाच्यस्य वर्णाश्रमाद्युचितधर्मो वा सम्पत्तिः स च आत्मत्वादिरित्यर्थः। सक्षत्रमित्यस्य क्षत्रियाणां योग्यं क्षत्रियत्वमित्यर्थः।

(३५) तृणमपीति साकल्यबोधकसहाव्ययेन समासः समासस्य नित्यत्वादस्वपदविग्रहः। अपरित्यज्येति परावरयोगे चेति (३०४६।१४०) क्त्वा तद्योगश्च बोध्यः।

(३६) सतृणमत्तीत्यादौ तृणेन सह भुङ्क्ते इति बोधोत्तरं यस्तृणानि भक्षयेत् स कथमन्यत् परित्यजेदिति प्रतीतेः सकलं भोज्यमत्तीत्यर्थे तात्पर्यमिति भावः।

(३७) अन्त इति इदानीमेतावान् प्रदेशोऽध्येय इति सङ्कल्पेन यावतो ग्रन्थस्य परिग्रहस्तावतः समाप्तिरिहान्तशब्देनोच्यते तस्मिन्‌प्रमाणसाकल्येऽ-ध्ययने भवतीति साकल्यात् पृथगुक्तिः। अग्निशब्दस्तत्प्रतिपादक-ग्रन्थपरः स च अन्तार्थकाव्ययेन नित्यं समस्यते इति सूत्रार्थः। तस्य च नित्यसमासत्वादस्वपदविग्रहं दर्शयति अग्निग्रन्थपर्यन्तमिति। बहु-व्रीहौ द्वितीयान्तग्रन्थ एवान्यपदार्थः। अधीते इत्यस्य तु न समासा-न्तर्भावो सामर्थ्याभावात् किन्तूदाहरणार्थत्वेन दिङ्मात्रतयोपदेशः। अन्तत्वं साहित्यन्तु समासार्थत्वेन अन्त्याग्निग्रन्थवर्तित्वमिति बोधः।

(३८) यथा असादृश्ये इति [illegible] इति। यथा हरिस्तथा हर इत्यादौ यथातथाशब्दस्य सादृश्यार्थकत्वेऽपि न पूर्वेण समासः सदृश इत्युक्ते नियमेन प्रतियोग्याकाङ्क्षादर्शनात् सादृश्यप्रतियोगिवाचके-नैव तद्बोधकाव्ययेन समासविधानेऽप्यनेन निषेधात्।

हरिस्तथा हरः। हरेरुपमानत्वं यथाशब्दो द्योतयति(३९) तेन सादृश्ये इति वा यथार्थे इति वा प्राप्तं निषिध्यते।

**यावदवधारणे (४०)। २। १। ८।**

यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकम्।

**सुप् प्रतिना मात्रार्थे। २। १। ९।**

शाकस्य(४१) लेशः शाकप्रति। मात्रार्थे किम् वृक्षं प्रति विद्योतते विद्युत्।

**अक्षशलाकासंख्याः परिणा। २। १। १०।**

---

(३९) द्योतयतीति सामान्यस्य भेदको यो विशेषस्तद्रूपे प्रकारे थालि यथा-तथाशब्दौ सिद्धौ तेन यद्विशेषवान् हरिस्तद्विशेषवान् हरस्तथा च हर्यभिन्नो हर इति बोधयद्यत्तच्छब्दाभ्यां तयोरेकत्वावगमेऽर्था-दुपमानत्वप्रतीतिरिति भावः। सादृश्यशब्देनोपमानत्वमेव गृह्यते थाल्सूत्रे प्रकारशब्देन सादृश्यस्य ग्रहणेऽपि यत्सादृश्यवान् हरि-स्तत्सादृश्यवान् हर इत्येव बोधः स्यान्न तु हरिसदृशो हर इति नोप-मानत्वमतो न समास इति ध्येयम्। भाष्यानुसारिणस्तु यथाऽसा-दृश्ये इति सूत्रस्य यथाशब्दः सुबन्तेन समस्यते सादृश्ये द्योत्ये नेत्यर्थं मत्वा यथार्थञ्च यथावत्तमित्युदाहृत्य यथार्थत्वेन प्राप्तेऽपि यथाशब्द-घटितसमासार्थता तदारम्भस्येत्याहुः। शब्देन्दु०

(४०) यावदिति सङ्ख्यादिनैयत्यापरिच्छेदोऽवधारणं तद्बोधकं यावदित्यव्ययं समर्थेन समस्यते इत्यर्थः। अवधारणे किं यावद्दत्तं तावद्भुक्तं नाव-धारयामीत्यर्थः। विग्रहवाक्ये यावच्छब्दस्तद्धितान्त इत्यस्वपद-विग्रहः।

(४१) सुबिति पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थमिति द्योतयन्नाह शाकस्येति तेनात्र शाकस्यानव्ययत्वेऽपि समासशास्त्रे प्रथमानिर्दिष्टतया पूर्व-निपातः।

द्यूतव्यवहारे पराजये एवायं समासः। अक्षेण विपरीतं वृत्तम् (४२) अक्षपरि। शलाकापरि। एकपरि।

**विभाषा। २। १। ११।**

अधिकारोऽयम्। एतत्सामर्थ्यादेव प्राचीनानामित्यसमासत्वम्। सह सुपेति(३२८ पृ०)तु(४३)न नित्यसमासः अव्ययमित्यादि(३२१पृ०)समासविधानात् (४४)ज्ञापकात्।

**अपपरिवहिरञ्चवः पञ्चम्या। २। १। १२।**

अपविष्णु संसारः। अप विष्णोः। परिविष्णु परि विष्णोः। वहिर्वनम् वहिर्वनात्। प्राग्वनम् प्राग्वनात्।

**आङ् मर्य्यादाभिविध्योः। २। १। १३।**

एतयोराङ् पञ्चम्यन्तेन वा समस्यते सोऽव्ययीभावः। आमुक्ति संसारः आ मुक्तेः। आबालं हरिभक्तिः आ बालेभ्यः।

---

(४२) पराजयं द्योतयितुं विपरीतं वृत्तमित्युक्तं जये यथा पूर्वं तथा न वृत्तमित्यर्थः एकपरीत्यस्य एकेन विपरीतं वृत्तमित्यर्थः। तथा हि पञ्चभिः कपर्दैः पञ्चिका नाम द्यूतमस्ति तत्पातने यदि सर्वे उत्ताना अवाञ्चो वा पतितास्तदा पातयिता जयति अन्यथा जीयते तत्र विपरीतवर्त्तने अक्षादेः कर्तृतया तृतीया। समासे परेरेव तदर्थः वैपरीत्यञ्च जयापेक्षयेति बोध्यम्।

(४३) सह सुपेति त्विति विस्पष्टपटुरित्यत्र विस्पष्टं पटुरिति भाष्ये विग्रहदर्शनाच्च नित्यत्वमिति बोध्यम्।

(४४) समासविधानादिति सह सुपेति समासानुवादेनैवाव्ययीभावादिसंज्ञाविधानसिद्धौ पुनस्तैः समाससंज्ञाविधानं तदनित्यताज्ञापकमिति भावः।

### लक्षणेनाभिप्रती(४५) आभिमुख्ये। २।१।१४।

आभिमुख्यद्योतकौ अभिप्रती चिह्नवाचिना सह प्राग्वत्। अभ्यग्नि शलभाः पतन्ति अग्निमभि। प्रत्यग्नि अग्निं प्रति।

### अनुर्यत्समया। २।१।१५।

यस्य पदार्थ(४६) समया द्योत्यते तेन लक्षणभूतेनाऽनुः समस्यते सोऽव्ययीभावः। अनुवनमशनिर्गतः। वनस्य (४७)समीपं गत इत्यर्थः।

### यस्य चायामः। २।१।१६।

यस्य दैर्घ्यमनुना द्योत्यते तेन लक्षणभूतेनानुः समस्यते। अनुगङ्गं (४८) वाराणसी गङ्गाया अनु। गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः।

---

(४५) लक्षणेनेति अभिप्रती अभिमुख्यसाम्याद्योतकत्वसम्बन्धेनान्वयस्य च द्योतकौ उदाहरणे अग्निप्राप्यं शलभकर्तृकमग्न्यभिमुखं पतनमिति बोधः। वाक्ये तु कर्मप्रवचनीयद्योत्यसम्बन्धेन अन्वयिनो द्वितीयेत्युदाहरति अग्निमभीति। लक्षणेनेति किं ग्रामं प्रति गतः ग्रामादागत इत्यस्य तस्यैव प्रतिनिवृत्त इत्यर्थकतया कर्मत्वान्न लक्षणता। इत्थं प्रतीत्यत्राभिमुख्याभावेन लक्षणत्वेऽपि न समास इति बोध्यम्।

(४६) लक्षणेनेत्यनुवर्तते समयेत्यधिकरणशक्तिप्रधानं यदिति सामान्येन नपुंसकं द्वितीयान्तञ्च सामर्थ्येनाकं पदार्थमित्यादि।

(४७) वनादेर्लक्षणत्वञ्च समीपद्वारा समीपेन वनेनाग्निदेशो ज्ञाप्यते इति तस्य लक्षणत्वमिति बोध्यम्।

(४८ दैर्घ्यसदृशदैर्घ्यं विशिष्टत्वमनयोर्बोध्यं तथा बोधे च गङ्गादेर्ज्ञापकत्वाल्ल-

## तिष्ठद्गुप्रभृतीनि(४९)च। २। १। १७।

एतानि निपात्यन्ते। तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु दोहनकालः। आयतीगवम्। इह शत्रादेशः पुंवद्भाव-विरहः समासान्तश्च निपात्यते।

## पारेमध्ये षष्ठ्या वा। २। १। १८।

पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते। एदन्तत्वञ्चान-योर्निपात्यते। पक्षे षष्ठीतत्पुरुषः। पारे गङ्गादानय गङ्गा-पारात्। मध्ये गङ्गात् गङ्गामध्यात्। महाविकल्पेन वाक्य-मपि गङ्गायाः पारात्। गङ्गाया मध्यात्।

## संख्या वंश्येन। २। १। १९।

वंशो (५०) द्विधा विद्यया जन्मना च तत्र भवो वंश्यः तद्वा-

---

च्यत्वम् तथाच पाराचक्षाः स्वरूपेण ख्यातत्वेऽपि दैर्घ्यविशेषवै-शिष्ट्येन न ख्याततमिति गङ्गया तद्बोध इति बोध्यम्।

(४९) तिष्ठद्गु प्रभृतीनीत्यत्र चकारस्यावधारणार्थतया तेषां समासान्तरप्र-वेशो नास्ति। या तिष्ठद्गु जपन् सन्ध्यामित्यादौ या इति पृथक् पद-मिति। शब्देन्दु०

तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूय-मानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम्। संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम्। दुःषमम् निःषमम् अपसमम् आयतीसमम् प्रोढम् पापसमम् पुण्य-समम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् अपरदक्षिणम् सम्प्रति असम्प्रति इच्प्रत्ययः समासान्तः एते तिष्ठद्गुप्रभृतयः।

(५०) वंशो न्वादिनिबन्धनी समानाभिजनविषया। एकस्वभावः सन्तान-

विना सह संख्या वा समस्यते। द्वौ मुनी वंश्यौ द्विमुनि व्याकरणस्य त्रिमुनि। विद्या (५१)तद्वतामभेदविवक्षायाम् त्रिमुनि व्याकरणम्। एकविंशतिभारद्वाजम् (५२)।

## नदीभिश्च। २। १। २०।

नदीभिः (५३) संख्या प्राग्वत्। समाहारे (५४)चायमिष्यते। सप्तगङ्गम्। द्वियमुनम्।

## अन्यपदार्थे च संज्ञायाम्। २। १। २१।

अन्यपदार्थे(५५)विद्यमानं सुबन्तन्नदीभिः सह नित्यं सम-

---

प्रबन्धो वंशो विद्याजन्मकृतोद्विविधस्तत्र विद्यया समानस्वभावविषये द्विमुनीति मुनीपाणिनिकात्यायनौ। त्रिमुनीति पतञ्जलिसहितौ तौ

(५१) त्रिमुनि व्याकरणमिति सामानाधिकरण्यानुपपत्तिमाशङ्क्याह विद्येति तथा च बहुव्रीहौ त्रिमुनि व्याकरणम् अव्ययीभावे व्याकरणस्य त्रिमुनीति प्रयोगः स्वरभेदश्चेष्ट एवेति भावः।

(५२) जन्मना वंशभेदे उदाहरति एकविंशतीति एकविंशतिर्भारद्वाजा-वंश्या इति विग्रहः।

(५३) नदीभिश्चेति बहुवचनग्रहणात् न संज्ञारूपनदीग्रहणं नापि स्वरूप-ग्रहणं किन्तु नदीत्वार्थग्रहणं तेन सामान्यविशेषनदीवाचकशब्दमा-त्रेऽस्य प्रवृत्तिः।

(५४) समाहारे चेति(२।१।४०)सूत्रे एवकारार्थकश्चकारः समाहारान्यव्यव-च्छेदकस्तेन द्विगोरपवादोऽयमव्ययीभावः।

(५५) अन्यपदार्थे इति संख्येति निवृत्तं नदीभिरित्यनुवर्तते सुबन्तं नदी-भिः सह नित्यं समस्यते इत्यर्थः। अन्यपदार्थे किं कृष्णवेणी संज्ञायां किं शीघ्रगङ्गो देश इत्यत्र मा भूत्।

स्यात् संज्ञायाम्। विभाषाधिकारेऽपि वाक्येन संज्ञानवगमात् (५६) इह नित्यसमासः। उन्मत्तगङ्गं नाम देशः। लोहितगङ्गम्।

**समासान्ताः (५७)। ५। ४। ६८।**

इत्यधिकृत्य।

**अव्ययीभावे शरत्प्रभृतिभ्यः। ५। ४। १०७।**

शरदादिभ्यष्टच् स्यात् समासान्तो(५८)ऽव्ययीभावे। शरदः समीपमुपशरदम्। प्रतिविपाशम्। शरद् (५९) विपाश्

(५६) संज्ञाऽनवगमात् संज्ञितो देशविशेषस्यानवगमात् नित्यसमास इति नित्यसमाससदृश इत्यर्थः वाक्यस्य समाससमानार्थकवाक्याभाववत्त्वेन। समासघटकपदानां विग्रहस्वस्वत्वेऽपि बोध्यम्।

(५७) साधारणसमासान्तानामेकस्मिन् प्रकरणे वक्तुमशक्यत्वेऽपि अव्ययीभावेऽसाधारणसमासान्तान् निर्देष्टुमुपक्रमते समासान्ता इति अत्र समासान्तघटकं समासपदं तत्पुरुषान्यलौकिकविग्रहवाक्यपरमेवमव्ययीभावादिपदान्यपि तत्पराणि तथा चालौकिकविग्रहवाक्ये समाससंज्ञासमकालमेव समासान्त इति सिद्धान्तः। अन्तपदं च चरमावयववाची स च समुदाय एव तेनोपशरदमित्यादौ नाव्ययीभावादित्यादिना (२२२पृ०)ऽमोलोपाभावौ सिद्धौ। अन्यथा पूर्वमागतस्याव्ययीभावत्वे नाव्ययत्वात् तस्य चादन्तत्वाभावेन लुगापत्तिरिति बोध्यम्

(५८) अव्ययीभावे उत्तरपदतया वर्तमानं यच्छरदादिप्रकृतिकं सुबन्तं तदन्तात् स च समाससमानार्थकविग्रहवाक्याभावश्च इत्यर्थः। टान्ताः चकिभ्यः टजित्यत(१८२पृ०) इत्यनुवर्तते। एवञ्च अनश्चेति (२२४पृ०) सूत्रे अनन्तादव्ययीभावादित्युक्तिस्तु फलितार्थपरतया बोध्या- त्रिधेयेति। यद्देन॰

(५९) शरदादिं पठति शरदित्यादि अत्र अवन्तानां पाठो नित्यटजर्थ-

अनस् मनस् उपानह् दिव् हिमवत् अनडुह् दिश् दृश् विश् चेतस् चतुर् त्यद् तद् यद् कियत् जराया जरस् च। उपजरसम्। प्रतिपरसमनुभ्योऽक्ष्णः। यस्येति(१२६पृ०)च। प्रत्यक्षम् (६०)। अक्ष्णः परमिति विग्रहे समासान्तविधानसामर्थ्यादव्ययीभावः। परोक्षे लिटिति(७८पृ०)निपातनात्परस्योकारादेशः। परोक्षम्(६१)। परोक्षा क्रियेत्यादि तु अर्श आद्यचि। समक्षम्। अन्वक्षम्।

**अनश्च। ५। ४। १०८।**

अन्नन्तादव्ययीभावाट्टच् स्यात्।

**नस्तद्धिते। ६। ४। १४४।**

नान्तस्य भस्य टेर्लोपः स्यात्तद्धिते। उपराजम्। अध्यात्मम्।

**नपुंसकादन्यतरस्याम्। ५। ४। १०९।**

अन्नन्तं यत् क्लीवन्तदन्तादव्ययीभावाट्टच् वा स्यात्। उपचर्मम् उपचर्म।

---

त्वेन भय इत्यनेन शरदादौ न विकल्पेन टच्। अत्र गणे हिरुक् विट् सट् इत्यधिकाः पाठाः क्वचित् दृश्यन्ते।

(६०) प्रत्यक्षमिति लक्षणेनाभिप्रती इत्यनेन (२२०पृ०) समासः अक्षिशब्देन इन्द्रियमात्रं लक्ष्यते इन्द्रियाणाञ्च ज्ञानं प्रत्येव हेतुत्वात् प्रत्यक्षशब्देन इन्द्रियसन्निकर्षोत्पन्नं ज्ञानमुच्यते विषयादौ तु परोक्षादिवत् अर्श आद्यजन्ततया तस्य प्रवृत्तिः।

(६१) परोक्षशब्देन] तद्विपरीतमिन्द्रियाजन्यं ज्ञानमुच्यत इति विशेषः; अक्ष्णोर्योग्यं समक्षम् अक्ष्णः पश्चादन्वक्षमिति निर्देशः।

**नदी(६२)पौर्णमास्याग्रहायणीभ्यः। ५। ४। ११०।**

वा टच् स्यात्। उपनदम् उपनदि। उपपौर्णमासम् उपपौर्णमासि। उपाग्रहायणम् उपाग्रहायणि।

**झयः। ५। ४। १११।**

झयन्तादव्ययीभावाट्टच् वा स्यात्। उपसमिधम् उपसमित्।

**गिरेश्च सेनकस्य। ५। ४। ११२।**

गिर्यन्तादव्ययीभावाट्टच् वा स्यात्। सेनकग्रहणम् पूजार्थम्। उपगिरम् उपगिरि।

इत्यव्ययीभावः।

---

(६२) नदीति इह स्वरूपस्यैव ग्रहणं न संज्ञायाः नदीसंज्ञकस्यापि पौर्णमासीशब्दस्य पृथङ्निर्देशात्। पौर्णमासीशब्दस्तु स्वरूपपरो-नार्थपरस्तद्विशेषाग्रहायण्याः पृथङ्निर्देशादिति बोध्यम्।

**तत्पुरुषः । २ । १ । २२ ।**

अधिकारोऽयम् । प्राग्बहुव्रीहेः ।

**द्विगुश्च । २ । १ । २३ ।**

द्विगुरपि तत्पुरुषसंज्ञः स्यात् । इदं सूत्रं त्यक्तुं शक्यम् संख्यापूर्वो द्विगुश्चेति पठित्वा चकारबलेन(१) संज्ञासमावेशस्य सुवचत्वात् । समासान्तः(२) प्रयोजनम् । पञ्चराजम् ।

**द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः । २ । १ । २४ ।**

द्वितीयान्तं(३) श्रितादिप्रकृतिकैः(४) सुबन्तैः सह समस्यते वा स च तत्पुरुषः । कृष्णं श्रितः कृष्णश्रितः । दुःखमतीतः

---

(१) चकारबलेनेति संख्यापूर्वो द्विगुश्चेत्यस्य संख्यापूर्वो द्विगुः स्यात् चकारात् तत्पुरुष इत्यर्थलाभसम्भवादिति भावः ।

(२) द्विगोस्तत्पुरुषसंज्ञायाः फलमाह समासान्त इति स च टजादिरित्यर्थः ।

(३) प्रत्ययग्रहणे तदन्तग्रहणमिति न्यायात् द्वितीयापदं द्वितीयान्तपरमित्याशयेनाह द्वितीयान्तमिति अत्र च समासप्रत्ययविधौ तदन्तविधित्वाभावात् कष्टं परमश्रित इत्यादौ श्रितान्तेन न समास इति बोध्यम् ।

(४) श्रितातीतादीनां सुबन्तत्वासम्भवेन सम्बोधनान्ततया क्वचित् तथात्वेऽपि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणनियमेन श्रितादिप्रकृतिकस्यैव समासः स्यादित्याशयेनाह श्रितादिप्रकृतिकैरिति, सह सुपेति (२१८४०) अधिकारात्तदर्थलाभ इति भावः ।

दुःखातीतः । गम्यादीनामुपसंख्यानम् (५) * । ग्रामं गमी ग्रामगमी । अन्नं बुभुक्षुः अन्नबुभुक्षुः ।

**स्वयं क्तेन ।२।१।२५।**

द्वितीयेति न (६) सम्बध्यतेऽयोग्यत्वात् । स्वयं कृतस्यापत्यम् स्वायंकृतिः (७) ।

**खट्वा क्षेपे ।२।१।२६।**

खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन सुबन्तेन समस्यते निन्दायाम् । खट्वारूढो जाल्मः (८) । नित्यसमासोऽयम् । न हि वाक्येन निन्दा गम्यते ।

**सामि (९) ।२।१।२७।**

सामिकृतम् ।

**कालाः ।२।१।२८।**

---

(५) श्रितादिषु गमिगाम्यादीनामुपसंख्यानात् ग्रामं गामीति वाक्ये ग्रामगामीति समासः ।

(६) स्वयमित्यव्ययमेतदेकं कर्तृशक्तिप्रधानं तेनान्वयायोग्यत्वात् न द्वितीयान्तस्य ग्रहणं द्वितीयेति नेति ।

(७) अपत्यार्थे तु स्वयं कर्तुरिति स्यात् । तथेत्यर्थेऽपि समासफलम् ।

(८) जाल्मप्रकृतितया तस्य कैवल्यरूढत्वं प्रतीयतेऽतो न वाक्येन तदर्थावगमः प्रकरणादिना योगरूढ एव तथापीत्यर्थेऽपि कैवल्यरूढं तत्किम् समास एवेति भावः ।

(९) सामिपदं ह्यर्द्धवाची सामीत्यव्ययं कृतेन सह समस्यते इत्यर्थः ।

क्तेनेत्येव अनत्यन्तसंयोगार्थं (१०) वचनम्। मासप्रमितः प्रतिपच्चन्द्रः। मासम्परिच्छेत्तु (११) मारब्ध इत्यर्थः।

**अत्यन्तसंयोगे च। २। १। २९।**

काला इत्येव अक्तान्तार्थं वचनम् (१२) मुहूर्तं सुखं मुहूर्त्तसुखम्।

**तृतीया तत्कृतार्थेन गुणवचनेन। २। १। ३०।**

तत्कृतेति लुप्ततृतीयाकं (१३) तृतीयान्तं तृतीयान्तार्थकृत-

---

(१०) क्तान्ताक्तान्तसाधारण्येन अत्यन्तसंयोगे चेति सूत्रेण गतार्थतामाश-ङ्क्याह अनत्यन्तसंयोगार्थमिति।

(११) मासं परिच्छेत्तुमिति रभधातुयोगे शकधृषेत्यादिना (३।४।६५) तुमुन्।

(१२) काला इत्यनेनैव सिद्धे इदं सूत्रं व्यर्थमित्याशङ्क्याह अक्तान्तार्थमिति तथा च क्तेनेति नानुवर्त्तते इति भावः।

(१३) लुप्ततृतीयाकमिति सौत्रत्वादिति शेषः। एवं च तत्कृतेन तृतीयान्त-पदार्थकार्येऽपि अत्र तदन्तार्थो लभ्यते तत्र च गुणवचनेनेत्यनेना-न्वयः गुणवचनस्य च तत्कृतत्वमर्थद्वारा तथा च तृतीयान्तार्थकृतो यो गुणस्तद्वाचकेन सह समास इत्याशयेन व्याचष्टे तृतीयान्तार्थकृतगुण-वचनेनेति। अर्थेनेति योऽपि पृथङ्निर्दिष्टमिति बोध्यम्। अत्र गुणवचनेनेति अनुमत्या गुणवाचिनि वर्त्तते इत्यर्थवाचिन एव पञ्चार्थं वचनपदमुपात्तम् गुणवाचि घटनात् तेन कृष्णपटस्य क्रियापरत्वेऽपि नीदोऽपकृष्टताकृतिः। तथा च तत्कारक इव तत्कर्तृ-ऽस्य प्रवृत्तिः न साक्षात्। परम्परान्वये तु तद्योगे हेतौ तृतीयेति न तत्र प्रवृत्तिः। एतद्द्योतनायैव सूत्रे तत्कृतेत्युक्तम्। एतेन कृतं पाठेन कुर्वन्नेन कृतं रूपमित्यादौ तत्कृतत्वाभावेऽपि तृतीयया

गुणवचनेनार्थशब्देन च सह प्राग्वत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। धान्येनार्थो (१४) धान्यार्थः। तत्कृतेति किम्। अक्ष्णा (१५) काणः।

**पूर्वसदृश(१६)समोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ २। १। ३१॥**

तृतीयान्तमेतैः प्राग्वत्। मासपूर्वः। मातृसदृशः। पितृसमः। ऊनार्थे(१७)। माषोनम् कार्षापणम्। माषविकलम्। वाक्कलहः। आचारनिपुणः। गुडमिश्रः। आचारश्लक्ष्णः। मिश्रग्रहणे सोपसर्गस्यापि ग्रहणं मिश्रं(१८)चानुपसर्गमसन्धौ (उ६००पृ०) इत्यनुपसर्गग्रहणात्। गुडसंमिश्रा धानाः। अवरस्योपसंख्यानम् *। मासावरो मासेनावरः।

---

न समासः रूपपाठयादेर्गुणवाचित्वेऽपि द्रव्यवाचित्वाभावात्। शङ्कु-लाखण्ड इत्यत्र शङ्कुलाकृतखण्डगुणवाचिनिति बोध्यः।

(१४) अर्थशब्दो धनपरो धान्येनेति हेतुतृतीया तेनार्थनमर्थं इत्यर्थः कर्म-ऽस्य क्रियापरत्वे न कर्तृकरणयोरित्यनेनैव गतार्थत्वं न सङ्गमिति।

(१५) अक्ष्णेति न ह्यक्ष्णा काणत्वं कृतं किन्तु काणादिनैवेति न तत्कृत-काणत्वम् येनाङ्गविकार इत्यनेन (२७२पृ०) तृतीया।

(१६) पूर्वसदृशेति। तुल्यार्थैरतुलोपमाभ्यां योगे तृतीयान्यतरस्यामिति (२०५पृ०) षष्ठी च तृतीया विकल्पेनैव प्राप्तयोस्तृतीयैव भवतीति विवेकः।

(१७) पूर्वसूत्रे अर्थशब्दग्रहणादूनार्थशब्दोऽभिधेयवाची च योगेनैवाद्यतो न तु पूर्वादिभिः समर्थयोः पृथग्निर्देशादिसमासेनानार्थे इति।

(१८) मिश्रेति समस्तेनैवार्थं यथिसमासप्रयुक्तानो मिश्रशब्दः तृतीया-न्तात् परः उपसर्गरहितोऽन्योदाहः स्यादिति सूत्रार्थः।

**कर्त्तृकरणे कृता बहुलम् । २ । १ । ३२ ।**

कर्त्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः । कृद्ग्रहणे(१९) गतिकारकपूर्वस्यापि ग्रहणम् । नखनिर्भिन्नः । कर्त्तृकरणे इति किम् भिक्षाभिरुषितः हेतावेषा तृतीया । बहुल(२०) ग्रहणं सर्वोपाधिव्यभिचारार्थम् । तेन दात्रेण लूनवान् इत्यादौ न । कृतेति किम् (२१) । काष्ठैः पचतितराम्(२२) ।

**कृत्यैरधिकार्थवचने । २ । १ । ३३ ।**

स्तुतिनिन्दाफलकमर्थवाद(२३) वचनमधिकार्थवचनं तत्र कर्त्तरि करणे च तृतीया कृत्यैः सह प्राग्वत् । वातच्छेद्यं तृणम् काकपेया (२४) नदी ।

---

(१९) यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र तत्पूर्वकस्यापि ग्रहणमपि ग्रहणात् तदसमभिव्याहारे केवलस्यापीत्यर्थः ।

(२०) बहुलेति तेन क्वचित् न समस्यते क्वचिच्च विभक्त्यन्तरमपि समस्यते । तत्र न समस्यते इत्यस्योदाहरणमाह दात्रेणेति अन्यविभक्तिसमासे तु पादहारक इत्याद्युदाहरणम् ।

(२१) कृतेति किमिति [illegible] (११९४०) [illegible] भविष्यतीति किं [illegible] प्रश्नः ।

(२२) पचतितरामित्यत्र [illegible] तद्योगे समासप्रसङ्ग [illegible] ।

(२३) अर्थवादः [illegible] । [illegible] ।

(२४) काकपेयेति । [illegible] । [illegible] । वातच्छेद्यमित्यत्र तु [illegible] ।

### अन्नेन व्यञ्जनम् । २ । १ । ३४ ।

संस्कारद्रव्यवाचकं तृतीयान्तमन्नेन (२५) प्राग्वत् । दध्ना ओदनो दध्योदनः । इहान्तर्भूतो (२६) पसेकक्रियाद्वारा सामर्थ्यम् ।

### भक्ष्येण (२७) मिश्रीकरणम् । २ । १ । ३५ ।

गुडेन धानाः गुडधानाः । मिश्रणक्रियाद्वारा सामर्थ्यम् ।

### चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः । २ । १ । ३६ ।

चतुर्थ्यन्तार्थाय (२८) यत् तद्वाचिनार्थादिभिश्च चतुर्थ्यन्तं वा

---

(२५) अन्नशब्देन न स्वरूपग्रहणं व्याख्यानात् नापि यौगिकार्थग्रहणं किन्तु योगाद्रूढिर्बलीयसीत्युक्तेरोदनपर्यायग्रहणमिति बोध्यम् ।

(२६) अन्तर्भूतेति तां विना दध्नः संस्कार्यत्वेन प्रतीतावसंस्कारकत्वानुपपत्तेरिति भावः । भाष्ये तु युक्तार्थसम्प्रत्ययाच्च सामर्थ्यमित्युक्तं तथा च दध्ना युक्तो योऽयं उपसेकादिस्तत्सम्प्रत्ययादिति तदर्थः ।

(२७) इदं विग्रहमात्रप्रदर्शकं भक्ष्यमित्युक्तेः कठिनं चिक्कणावयवं खाद्यं वस्तूच्यते तद्वाचिना मिश्रीकरणवाचि तृतीयान्तं समस्यते इति सूत्रार्थः मिश्रणद्वारैव तयोः सामर्थ्यम् ।

(२८) चतुर्थी तदर्थ इदं तदर्थमित्यर्थकं तदर्थपदं तत्र तच्छब्देन उपस्थितत्वात् चतुर्थ्यन्तपरामर्शसम्भवेऽपि चतुर्थ्यन्तार्थो लभ्यते तत्तत्कारकं चतुर्थी अर्थेन सह नित्यसमासविधानादिदमधिकरणं वा चतुर्थ्यन्तार्थायेति एतच्च वहित्वनेन व्याख्यायते तथा च चतुर्थ्यन्तार्थाय यत् तद्वाचि तदापि सुबन्तेन अर्थादिभिश्च चतुर्थ्यन्तं वा समस्यते इति सूत्रार्थः ।

प्राग्वत्। तदर्थेन प्रकृतिविकृतिभावएव बलिरक्षितग्रह(२९) णात् ज्ञापकात्। यूपाय दारु यूपदारु। नेह रन्धनाय स्थाली। अश्वघासादयस्तु षष्ठीसमासाः (३०)। अर्थेन नित्यसमासो विशेष्यलिङ्गता (३१) चेति वक्तव्यम्*। द्विजायायं द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थम्पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्।

**पञ्चमी भयेन। २। १। ३७।**

चौराद्भयम् चौरभयम्। भयभीत (३२) भीतिभीभिरिति वाच्यम्*। वृकभीतः।

**अपेतापोढमुक्तपतितापत्रस्तैरल्पशः। २। १। ३८।**

एतैः सहाल्प (३३) म्पञ्चम्यन्तं समस्यते स तत्पुरुषः।

---

(२९) बलिरक्षितग्रहणादिति हितसुखग्रहणं तु न ज्ञापकं तद्योगे चतुर्थी चाशिषीत्यनेन (२०६सू०) चतुर्थीविधानात् ताभ्यां तादर्थ्ये चतुर्थ्या असम्भवाच्चेति बोध्यम्।

(३०) षष्ठीसमासा इति स्वरविशेषात् शाब्दबोधे चतुर्थीतत्पुरुषेण बोधेन वैलक्षण्याच्चेति भावः।

(३१) अर्थशब्दस्य नित्यपुंस्त्वेन परवल्लिङ्गमित्यस्य (९८०सू०) बाधायाह विशेष्यलिङ्गता चेति एतद्वचनं विधेयं न तु नित्यत्वं चतुर्थ्यैव तदर्थेनोक्तत्वात्तत्प्रयोगे चार्थशब्देन विग्रहासम्भवः।

(३२) भयभीतेत्यादि निर्गतजुगुप्सोपरतादीनामुपलक्षणम् तेन ग्रामनिर्गतः भोगोपरतः अधर्मजुगुप्सित इत्यादिसिद्धिः।

(३३) अल्पशिति वाविधिरेव पञ्चम्यन्तानि [illegible] न [illegible]

सुखापेतः । कल्पनापोढः । चक्रमुक्तः । स्वर्गपतितः । तरङ्गापत्रस्तः । अल्पशः किम् । प्रासादात्पतितः ।

### स्तोका (३४) न्तिकदूरार्थकृच्छ्राणि क्तेन ।

### २ । १ । ३९ ।

स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्यासादागतः । दूरादागतः । कृच्छ्रादागतः । पञ्चम्याः स्तोकादिभ्य (४५७पृ०) इत्यलुक् ।

### षष्ठी । २ । २ । ८ ।

राज्ञः पुरुषः राजपुरुषः ।

### याजकादिभिश्च(३५) । २ । २ । ९ ।

एभिः षष्ठ्यन्तं समस्यते । तृजकाभ्यां कर्त्तरीत्यस्य(१४७पृ०) प्रतिप्रसवोऽयम् । ब्राह्मणयाजकः । देवपूजकः । गुणात्तरेण तरलोपश्चेति वक्तव्यम् । तरबन्तं यद्गुणवाचि तेन सह समासस्तरलोपश्च । न निर्द्धारणइति पूरणगुणेति(२४५पृ०)च निषेधस्य प्रतिप्रसवोऽयम् । सर्व्वेषां श्वेततरः सर्वश्वेतः । सर्व्वेषां

---

प्रासादात् पतित इत्यादौ नेति बोध्यम् सङ्ख्यासङ्ख्येयसम्बन्धाभावेऽपि अस्मादेव ज्ञापकात् निपातनाद्वा अल्पश इति ग्रस् ।

(३४) स्तोकेति अत्र स्तोकार्थोऽल्पपद एव न तु शेषादयो व्याख्यानात् ।

(३५) याजक पूजक परिचारक परिषेचक स्नापक अध्यापक उत्सादक उद्वर्तक होतृ भर्तृ रथगणक पत्तिगणक । एते याजकादयः ।

महत्तरः सर्व्वमहान् । कृद्योगा (३६) षष्ठी समस्यत इति वाच्यम्* । इध्मस्य व्रश्चन इध्मव्रश्चनः ।

**न निर्द्धारणे । २ । २ । १० ।**

निर्द्धारणे या षष्ठी सा न समस्यते । नृणां(३७)द्विजः श्रेष्ठः । प्रतिपदविधाना (३८) षष्ठी न समस्यतइति वाच्यम् * । सर्पिषो ज्ञानम् ।

**पूरणगुण (३९) सुहितार्थसदव्ययतव्यसमानाधिकरणेन । २ । २ । ११ ।**

---

(७६) कृद्योगेति । कर्त्तृकर्मणोः कृतीत्युक्तेः(२०० पृ०)षष्ठ्यैव कर्मत्वबोधनात् कर्मषष्ठ्यां समासाभावाशङ्कायामिदं सूत्रं प्रवृत्तम् उदाहरणेन तदेव सूचयति इध्मव्रश्चन इति कर्मषष्ठ्या समासः ।

(७७) नृणामिति निर्द्धारणषष्ठी । यस्मान्निर्द्धार्य्यते यश्च निर्द्धार्य्यते यश्च निर्द्धारणहेतुरेतत्त्रितयसन्निधाने सत्येव षष्ठी तत्रैवायं निषेध इति द्विवचने विभज्येति सूत्रे कैयटः । ततश्च पुरुषोत्तम इत्यादौ त्रितयसन्निधानाभावात् न निर्द्धारणविभक्तिः किन्तु सम्बन्धसामान्ये षष्ठीति तया समासः । अतएव कृत्वादिः शेष इति सूत्रे कृत्वामादिरिति षष्ठीसमास इति भाष्ये उक्तम् ।

(७८) प्रतिपदविधानेति पदं पदं प्रति प्रतिपदं सर्वेषु पदेषु न तु कृद्योगमात्रे विधानं यस्यास्तादृशी षष्ठी ज्ञोऽविदर्थस्येत्यादि(२९६ पृ०)चतुर्दश सूत्रैरधस्तादनुवर्त्तितशेषपदायां विहिता या षष्ठी सा न समस्यते इति वार्त्तिकार्थः ।

(३९) गुणेति गुणशब्देनेह यः केवलगुणवाची यश्च गुणवाची सन् गुणोपसर्ज्जनद्रव्यवाची यश्च गुणबोधकप्रकृतिकभावप्रत्ययान्तः तत्त्रितयमपि गृह्यते व्याख्यानात् तदेतदुदाहरणेनाह काकस्य कार्ष्ण्यमिति ।

पूरणार्थैः सदादिभिश्च षष्ठी न समस्यते। पूरणे। सतां षष्ठः। गुणे। काकस्य कार्ष्ण्यम्। ब्राह्मणस्य शुक्लाः। यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातस्तदेदमुदाहरणम्। अनित्योऽयं गुणेन निषेधः तदशिष्यं संज्ञाप्रमाणत्वादिति निर्देशात्। तेनार्थगौरवम्बुद्धिमान्द्यमित्यादि सिद्धम्। सुहितार्थास्तृप्त्यर्थाः। फलानां सुहितः। तृतीया(४०) समासस्तु स्यादेव स्वरे विशेषः। सत्। द्विजस्य कुर्वन् कुर्वाणो वा किङ्कर (४१) इत्यर्थः। अव्ययम्। ब्राह्मणस्य कृत्वा। पूर्वोत्तरसाहचर्यात् कृदव्ययमेव गृह्यते। तेन तदुपरीत्यादि सिद्धमिति रचितः। तव्यः। ब्राह्मणस्य कर्त्तव्यम्। तव्यता तु भवत्येव। स्वकर्त्तव्यम्। स्वरे भेदः। समानाधिकरणे। तक्षकस्य(४२) सर्पस्य। विशेषण(४३)समासस्त्विह बहुलग्र-

---

(४०) तृतीयेति तत्र करणत्वेन भानं षष्ठीसमासे तु सम्बन्धत्वेनेति विशेषस्यानतिप्रयोजनकतया स्वरकृतमेव विशेषमभ्याह स्वरे इति तृतीया कर्मणीति(३५७७सू०) पूर्वपदप्रकृतिस्वरत्वम् षष्ठीसमासे त्वन्तोदात्त इति भेदः।

(४१) द्विजस्येति षष्ठी न कुर्वन्नित्यपेक्षया न लोकेत्यादिना (२०१) निषेधात् किन्तु शेषे इत्याह किङ्कर इति।

(४२) तक्षकस्येति परिनिष्ठितविभक्त्या समास इति पक्षे। अत्र परत्वात् समानाधिकरणसमासं बाधित्वा षष्ठीसमासः प्राप्तः स निषिध्यते।

(४३) षष्ठीसमासनिषेधेऽपि विशेषणसमासोऽस्त्विति निषेधे फलाभाव इत्याशङ्क्याह विशेषणेति स च विशेषणं विशेष्येणेति समासः। बहुलग्रहणादिति कर्तृकरणे कृता बहुलमित्यत्र(४०सू०) बहुलग्रहणात् क्वचिन्नित्यत्वमपि नाभादित्यर्थः। इदमुपलक्षणम् स्वरकृतवैलक्षण्येऽपि बोध्यं कर्मधारये पूर्वपदप्रकृतिस्वरः षष्ठीसमासे त्वन्तोदात्तत्वमिति विशेषस्य सत्त्वात्। मयूरव्यंसकादेरेव समास इति पक्षे तु तक्षकसर्पयो-

इत्यत्र गोर्धेनो(४४)रित्यादिषु पोटायुवतीत्यादीनां(२६२पृ०) विभक्त्यन्तरे चरितार्थानाम्परत्वाद्बाधकः षष्ठीसमासः प्राप्तः सोऽप्यनेन बाध्यते।

## क्तेन च पूजायाम्।२।२।१२।

मतिबुद्धीति (४५) सूत्रेण(उ२६२पृ०)विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते। राज्ञां मतो बुद्धः पूजितो वा। राजपूजित इत्यादौ तु भूते क्तान्तेन सह तृतीयान्तस्य समासः।

## अधिकरणवाचिना च।२।२।१३।

क्तेन षष्ठी न समस्यते। इदमेषामासितं गतम्भुक्तं वा।

## कर्मणि च।२।२।१४।

उभयप्राप्तौ कर्मणीति(३०१पृ०)(४६)या षष्ठी सा न समस्यते। आश्चर्यो गवान्दोहोऽगोपेन।

---

गाभाव एव। एतच्च भाष्यहरदत्तोदाहृतप्रयोगविषयमेव बोध्यम् तेनान्यस्य परस्यार्थे इत्यर्थकः अन्यपदार्थे इतिसूत्रप्रयोगः सङ्गच्छते तथाच नीलोत्पलस्य गन्ध इत्यादिसिद्धिः। शब्देन्दु०।

४४) फलान्तरमप्याह गोर्धेनोरिति षष्ठीसमासे गुणप्रवृत्तिनिमित्तकत्वेनाप्रधानत्वात् धेनोः पूर्वनिपातो विशेषणसमासे तु गोरिति भेद इति भावः। आदिना भोज्यस्योष्णस्येत्यादिसंग्रहः।

४५) पूजायामित्यस्य व्याख्यानात् मतिबुद्ध्यादिसूत्रपरत्वमाह मतीत्यादि इदं सूत्रं कारकषष्ठ्याश्चोभयोरपि बोधकमत्र उभयो रनिषेधकम्।

४६) कर्मणि चेति सूत्रे कर्मेति न सम्बध्यते पूजायां प्रतिषेधानर्थक्यात् तदाह कर्मणीति तथाच यथाह इतीत्यर्थे एवं च कर्मणीतिपदघटित

## तृजकाभ्यां कर्त्तरि। २। २। १५।

कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः। अपां स्रष्टा। व्रजस्य भर्त्ता। ओदनस्य पाचकः। कर्त्तरि किम् इक्षूणां भक्षणमिक्षुभक्षिका(४७)। पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः। भूभर्त्ता। कथन्तर्हि घटानां निर्मातुस्त्रिभुवनविधातुश्च कलह इति। शेषषष्ठ्या समास इति कैयटः।

## कर्त्तरि च। २। २। १६।

कर्त्तरि षष्ठ्या अकेन न समासः। भवतः शायिका। नेह तृजनुवर्त्तते तद्योगे कर्त्तुरभिहितत्वेन कर्त्तृषष्ठ्या अभावात्।

## नित्यं क्रीडाजीविकयोः। २। २। १७।

एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते। उद्दालकपुष्पभञ्जिका (४८)। क्रीडाविशेषस्य संज्ञा। संज्ञायामिति(१५२पृ०)

---

त्वेण या षष्ठी सा न समस्यते इत्यर्थः क्तान्तयोगे चोभयप्राप्त्यभावात् सर्वथैव क्तेनान्यस्य नानुवृत्तिरिति भावः। अत्रेदं बोध्यम् उभयप्राप्ताविति सूत्रे(२०१पृ०)कत्वोऽर्थनयोग इत्यतः(२००पृ०)प्रयोगशब्दस्यानुवर्त्तनात् कर्त्तृकर्मणोरुभयोरेव प्रयोगस्थले उभयप्राप्तियोग्यत्वमभिहारे या कर्मणि षष्ठी सा न समस्यते इत्यर्थः। एतच्च अथ शब्दानुशासनमित्यस्य व्याख्यायां भाष्यार्थस्य वस्तुतः कर्त्तुः सत्त्वेऽपीच्छानुपादानेन कर्मणि चेति न निषेधावकाश इत्येतन्मात्रार्थकेन भाष्येण विरुद्धम्।

(४७) इक्षुभक्षिकेति। अत्र कर्मषष्ठ्याः समासः कर्त्तृप्रयोगाभावेनोभयप्राप्तित्वस्याप्रसक्तेः कर्मणि चेति(२४६पृ०)निषेधो नेति भावः। भक्षिकेति भावार्थनिर्द्देशे ण्वुल्।

(४८) भञ्जनं भञ्जिका. उद्दालकस्य क्रीडातरोः पुष्पाणि भज्यन्ते यस्यां

खलु जीविकायाम् दन्तलेखकः। तत्र क्रीडायां विकल्पे(४९) जीविकायां तृजकाभ्यां कर्त्तरीति निषेधे च प्राप्ते वचनम्।

**पूर्वापरा(५०)धरोत्तरमेकदेशिनैकाधिकरणे ।२।२।१।**

अवयविना सह पूर्वादयः समस्यन्ते एकत्व(५१) संख्याविशिष्टश्चेदवयवी षष्ठी। (५२) समासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकदेशिना किम् पूर्वं नाभेः(५३)

---

क्रीडायां सा उद्दालकपुष्पभञ्जिका। संज्ञायां ण्वुलित्येव पाठः भावे ण्वुलिति पाठस्तु प्रामादिक उदाहरणेऽधिकरणस्यैव जीविकाया बोध्यत्वेन तत्र भावार्थकत्वाभावात्। अतएव धात्वर्थनिर्देशे इत्यनेनैव सिद्धे संज्ञायामित्यस्याधिकरणार्थत्वमिति न गतार्थता।

(४९) क्रीडायां विकल्प इति विभाषाधिकारात् वैकल्पिकसमासे प्राप्ते इत्यर्थः

(५०) षष्ठीसमासप्रसक्तात्तदपवादमेकदेशिसमासमाह पूर्वापरेति एकदेशो ऽवयवे रूढस्ततो मत्वर्थीय इनिः अवयवित्वस्यावयवाकाङ्क्षायामुपस्थितत्वात् पूर्वादय एवावयवा इति बोध्यम्।

(५१) अधिकरणं द्रव्यमेकत्वविशिष्टद्रव्ये वर्त्तमानेनावयविनेति वाक्यार्थः फलितस्तदाहैकत्वेति।

(५२) पूर्वकाय इत्यादेः कर्मधारयेणैव गतार्थतामाशङ्क्याह षष्ठीति तथा- च अवयवावयविनोर्भेदविवक्षायां षष्ठ्या कायस्य पूर्वमिति विग्रहे कायपूर्वमित्यनिष्टप्रयोगनिवारणार्थमिदं सूत्रमिति भावः। दिगुप- लक्षणपञ्चमी तु अतएव ज्ञापकात् अवयविनि प्रवर्त्तते इति न तत्प्रसङ्गाभावाशङ्का।

(५३) पूर्वं नाभेः कायस्येति नाभेर्यः पूर्वो भागः स कायस्यावयव इत्यर्थस्तेन नाभेरवयवित्वाभावात् पूर्वमत्र योगे पञ्चमी तथापि पूर्वस्य भागस्य नाभिरवयवित्वे कदेशीति नाभ्या न समास इति भावः।

कायस्य । एकाधिकरणे किम् । पूर्वश्छात्राणाम् । सर्वो-ऽप्येकदेशोऽह्ना समस्यते संख्याविसायेति (१०७सू०) ज्ञापकात् मध्याह्नः । सायाह्नः । केचित्तु सर्व्व एकदेशः कालेन सम-स्यते न त्वह्नैव ज्ञापकस्य सामान्यापेक्षत्वात् । तेन मध्यरात्रः "उपारताः पश्चिमरात्रगोचरा"इत्यादि सिद्धमित्याहुः ।

**अर्द्धं नपुंसकम् । २ । २ । २ ।**

समांशवाच्यर्द्धशब्दो नित्यं क्लीबे प्राग्वत् । एक(५४)विभक्ताव-षष्ठ्यन्तवचनम् * । एकदेशिसमासविषयकोऽयमुपसर्जनसं-ज्ञानिषेधः । तेन पञ्चखट्वी(५५)त्यादि सिध्यति । अर्द्धं पिप्प-ल्याः अर्द्धपिप्पली । क्लीबे किम् ग्रामार्द्धः । द्रव्यैक्य एव । अर्द्धम्पिप्पलीनाम् ।

**द्वितीयतृतीयचतुर्थतुर्य्याण्यन्यतरस्याम् ।२। २ । ३ ।**

एतान्येकदेशिना सह प्राग्वद्वा । द्वितीयम्भिक्षाया द्वितीय-भिक्षा । एकदेशिना किम् द्वितीयम्भिक्षाया भिक्षुकस्य । अन्यतरस्यां ग्रहणसामर्थ्यात् पूरणगुणेति(२४६सू०)निषेधं बा-धित्वा पक्षे षष्ठीसमासः । भिक्षाद्वितीयम् ।

---

*(५४) पिप्पल्या नियतविभक्तिकत्वे नैकविभक्ति चापूर्वनिपाते (२२२सू०) इत्य-नेनोपसर्जनत्वात् ह्रस्वत्वप्राप्त्यभावाच्च एकविभक्ताविति ।

(५५) पञ्चानां खट्वानां समाहार इत्यादौ खट्वाशब्दस्य षष्ठ्यन्तत्वेऽपि एक-देशिसमासत्वाभावादुपसर्जनत्वात् ह्रस्वे ङीविधानाच्च पञ्चखट्वीत्यादीति ।

## प्राप्तापन्ने च द्वितीयया । २ । २ । ४ ।

पक्षे द्वितीयाश्रितेति (२२६सू०) समासः । प्राप्तो जीविकाम् प्राप्तजीविकः (५६) जीविकां प्राप्तः जीविकाप्राप्तः आपन्नजीविकः जीविकापन्नः । इह सूत्रे द्वितीयया अ इति छित्त्वा अकारोऽपि विधीयते । तेन प्राप्ता जीविका स्त्री प्राप्तजीविका । आपन्नजीविका ।

## कालाः (५७) परिमाणिना । २ । २ । ५ ।

---

अन्यथाऽहृस्वत्वेऽदन्तत्वाभावेन ङीषोऽप्रवृत्तेस्तथारूपाऽसिद्धिरिति भावः । तथाच तथासङ्कोचे पञ्चखट्वीति भाष्योदाहरणमेव प्रमाणम् ।

(५६) प्राप्तजीविक इति गोस्त्रियो (२२२सू०) रित्युपसर्ज्जनह्रस्वः । द्विगुप्राप्तापन्नेत्यादिना(२९१सू०)परवल्लिङ्गनिषेधः स्वरभेदात् बहुव्रीहिणा न गतार्थता । किञ्च प्राप्तसुखादितत्पुरुषादौ बहुव्रीहिस्वीकारे निष्ठान्तस्य जातिकालसुखादिभ्यश्चेति (४२९सू०) परनिपातविधानात् परनिपातापत्तिरतस्तन्निरासायेदं सूत्रमिति द्रष्टव्यम् । प्राप्तापन्नेचेति चकारेण विधेयसमुच्चयार्थेनाकारप्रश्लेषानुमानादाह अइति छित्त्वेति अत्र आ इति च्छेदोऽपि द्रष्टव्यस्तेन आ अः स्यादिति सूत्रार्थः अन्यथाकारस्य स्थान्यपेक्षायां द्वितीयाया एव सन्निधानात्तदन्त्याकारस्यैव स्थानित्वेन कल्पनाप्रसक्तौ प्राप्तापदस्य आकारस्थाने अकारानुपपत्तिः ।

(५७) काला इति बहुवचनात् कालविशेषवाचका गृह्यन्ते । परिमीयते परिच्छिद्यते येन तत्परिमाणं परिच्छेदकं तद्वान् परिच्छेद्यस्तदाह परिच्छेद्यवाचिनेति तथाच कालाः परिमाणिना समस्यते तत् परिमाणी कालैरिति सूत्रार्थः । कालस्य तु परिच्छेदकत्वं क्रियाद्वारैव मासजातादिव्यवहारे जननक्रियाकालान्तराश्रयी मासादिजातादिकं पुरुषादि परिच्छिनत्ति येन स्वरादिजाते न माव-

परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते । मासो जातस्य यस्य स मासजातः । द्व्यहजातः द्वयोरह्नोः समाहारो द्व्यहः द्व्यहो जातस्येति विग्रहः । उत्तरपदेन(५८)परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम् * । द्वे अहनी जातस्य यस्य स द्व्यह्नजातः । अह्नोऽह्न इति(३८२पृ०) वक्ष्यमाणोऽह्नादेशः । पूर्वत्र तु (५९) न संख्यादेः समाहार इति (३८४पृ०) तन्निषेधः ।

**सप्तमी शौण्डैः । २ । १ । ४० ।**

सप्तम्यन्तं शौण्डादिभिः (६०) प्राग्वत् । अक्षेषु शौण्डः अक्षशौण्डः । अधिशब्दोऽत्र(६१) पठ्यते । अध्युत्तरपदादिति (७१८पृ०) खः । ईश्वराधीनः ।

---

जातादिव्यवहारः । इदन्तु फलं जातस्य मास इति विग्रहे जातमास इत्यनिष्टप्रयोगनिवारणार्थम् बहुव्रीहिणा गतार्थता तु न मासो जातोऽस्येत्यादितो मासस्यैव जननप्रतीतेर्न त्वन्यपदार्थस्य । वृत्तिविग्रहयोस्तुल्यार्थत्वेऽपि स्वल्पभाष्यप्रामाण्यादत्र न तथा कल्पनमत एव न मासस्य प्रधानताऽपि तु जातस्यैवेति द्योतनाय यस्य स इत्युक्तम् ।

(५८) उत्तरपदेनेति वार्त्तिकमेतत्तत्रविषयमेव तद्धितार्थेति सूत्रस्थत्वे एतस्य पाठेऽप्येतद्विषय एव भाष्यकृतोदाहरणात् ।

(५९) पूर्वत्र त्विति द्व्यहजात इत्यत्रेत्यर्थः ।

(६०) सप्तमीति अधिकरणकारकस्य कर्तृकर्मद्वारा क्रियान्वयाच्छौण्डादिभिः सामर्थ्यम् क्रिया चात्रासक्तिरन्या वेत्यत्र नाग्रहः ।
शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर् अधि पटु पण्डित कुशल चपल निपुण । इत्येते शौण्डादयः । शौण्डादिभिरिति वक्तव्यमित्युक्तेर्गणपरिग्रहार्थं बहुवचनम् ।

(६१) अधिशब्द इति आधेयप्रधान इति शेषः अधिकरणप्रधानस्य अव्ययी-

## सिद्धशुष्कपक्वबन्धैश्च । २ । १ । ४१ ।

एतैः सप्तम्यन्तं प्राग्वत् । साङ्काश्यसिद्धः । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः ।

## ध्वाङ्क्षेण क्षेपे । २ । १ । ४२ ।

ध्वाङ्क्षवाचिना सह सप्तम्यन्तं समस्यते निन्दायाम् । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः तीर्थकाक इत्यादि (६२) ।

## कृत्यै (६३) ऋणे । २ । १ । ४३ ।

सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वत् आवश्यके । मासे देयमृणम् । ऋणग्रहणन्नियोगोपलक्षणार्थं पूर्व्वाह्णेगेयं साम ।

## संज्ञायाम् । २ । १ । ४४ ।

सप्तम्यन्तं सुपा प्राग्वत् संज्ञायाम् । वाक्येन संज्ञानवगमा-

---

भाव एव । अन्तःशब्दोऽत्र पठ्यते स चाधिकरणप्रधानः मध्ये इत्यर्थकः तद्योगेऽव्ययविनः आधारत्वविवक्षायां सप्तमी यथा हस्ते पात्रेति । तथा च वनेऽन्तरित्यर्थे वनान्तर्वसतीति प्रयोगः । यस्तु अधिकरणत्व-मात्रवाचिरन्तःशब्दस्तेनान्तःशब्देनाव्ययीभाव एव अन्तर्वणमित्यादि ।

(६२) ध्वाङ्क्षेणेत्यर्थपरं द्योतयन्नुदाहरति तीर्थकाक इति क्षेपो हि निन्दा काकादिशब्दैः तत्प्रयोजकमित्यत एवशब्देन विग्रहः ।

(६३) कृत्यैरिति प्रत्ययमात्रं गृह्यते व्याख्यानात् । ऋणपदग्रहणमावश्यक-परमित्यभिप्रायेणाह नियोगोपलक्षणार्थमिति । तद्ग्रहणे कृति बहुल-(४६०पृ०)मित्यनेन स्वरविशेषार्थं समासस्वीकार इति बोध्यम् ।

नित्यसमासोऽयम्(६४)। अरण्येतिलकाः। वनेकसेरुकाः। हलदन्तात्सप्तम्याः (४५०पृ०) इत्यलुक्।

**क्तेनाहोरात्रावयवाः। २। १। ४५।**

अहो रात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत्। पूर्वाह्णकृतम्। अपररात्रकृतम्। अवयवग्रहणम् किम्। अह्नि दृष्टम्।

**तत्र। २। १। ४६।**

तत्रेत्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्वत्। तत्र भुक्तम्।

**क्षेपे। २। १। ४७।**

सप्तम्यन्तं क्तान्तेन प्राग्वन्निन्दायाम्। अवतप्ते नकुलस्थितं तव तदेव (६५)।

**पात्रेसमितादयश्च (६६)। २। १। ४८।**

---

(६४) नित्यसमासोऽयमिति तेन पुरुषोत्तमशब्दस्यापि संज्ञायुक्तत्वेन तत्रापि नित्यसमासतया पुरुषेपूत्तम इति विग्रहस्यानुचितत्वमेवेति द्रष्टव्यम्।

(६५) नकुलेन स्थितं नकुलस्थितमवतप्ते नकुलस्थितमिति वाक्ये तदेव समासरूपमपि तथैवेत्यर्थः। गतिकारकोपपदानां कृद्ग्रहणेन ग्रहणमिति परिभाषया नकुलस्थितशब्दस्यापि कृदन्तत्वात् तत्पुरुषे कृति बहुलमिति(४६०पृ०)सप्तम्या अलुक्। अव्यवस्थितत्वप्रतिपत्त्या निन्दा गम्यते इति बोध्यम्।

(६६) पात्रेसमित पात्रेबहुल उदुम्बरमशक उदुम्बरकृमि कूपकच्छप अवटकच्छप कूपमण्डूक कुम्भमण्डूक उदपानमण्डूक नगरकाक नगरवायस

एते निपात्यन्ते क्षेपे । पात्रेसमिताः । भोजनसमये एव सङ्गताः न तु कार्य्ये । गेहेशूरः । गेहेनर्दी । आकृतिगणोऽयम् । चकारोऽवधारणार्थः । तेनैषां समासान्तरे घटकतया प्रवेशो न । परमाः पात्रेसमिताः ।

**पूर्वकालैकसर्वजरत्पुराणनवकेवलाः (६७) समानाधिकरणेन । २ । १ । ४९ ।**

विशेषणं विशेष्येणेति सिद्धे पूर्वनिपातनियमार्थं(६८) सूत्रम् । एकशब्दस्य दिक्संख्ये संज्ञायामिति(२१४५०) नियमबाधनार्थं च (६९) पूर्वं स्नातः पश्चादनुलिप्तः । स्नातानुलिप्तः । एकनाथः । सर्व्वयाज्ञिकाः । जरन्नैयायिकाः । पुराणमीमांसकाः । नवपाठकाः । केवलवैयाकरणाः ।

---

मातरिपुरुष पिण्डीशूर पितरिशूर गेहेशूर गेहेनर्दिन् गेहेक्ष्वेडिन् गेहेविजिती गेहेव्याड गेहेमेहिन् गेहेदाहिन् गेहेदृप्त गेहेधृष्ट गर्भेतृप्त आखनिकबक गोष्ठेशूर गोष्ठेविजिती गोष्ठेक्ष्वेड गोष्ठेपटु गोष्ठेपण्डित गोष्ठेप्रगल्भ कर्णेटिरिटिरा कर्णेचुरचुरा पात्रेसमितादयः । आकृतिगणोऽयम् ।

(६७) अत्र पूर्वकाल शब्दोऽर्थपरोऽन्ये शब्दस्वरूपपराः पूर्वः कालो यस्य स पूर्वकालः तत्पदार्थवाचकः शब्दः प्रत्यासत्त्या परकालिकवस्तुवाचिना समस्यते एवमन्येऽपीति

(६८) नियमार्थमिति एषां विशेषणत्वानैयत्येऽपि एषामेव विशेषणत्वार्थम् ।

(६९) नियमबाधनार्थं चेति तेन शुद्धाद्यर्थकैकशब्दस्य नात्र पाक्षिकमिति भावः । नवशब्दस्य पुराणशब्दपर्य्यायात् नूतनार्थकतयैकशब्दस्यैव नियमबाधकः ।

(७०) नियमार्थमिति विशेषणं विशेष्येणेत्यनेनैव(२१०५०)सिद्धे तत्पुरुषे संज्ञा-

## दिक्संख्ये संज्ञायाम् । २ । १ । ५० ।

समानाधिकरणेनेत्यापादपरिसमाप्तेरधिकारः । संज्ञायामेवेति (७०) नियमार्थं सूत्रम् । पूर्वेषु कामशमी । सप्तर्षयः । नेह उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ।

## तद्धितार्थोत्तरपदसमाहारे च (७१) । २ । १ । ५१ ।

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये

---

यामेव दिक्संख्ये समस्येते नान्यत्रेति नियामकमिदमिति भावः । त्रिलोकनाथ इत्यादौ तु उत्तरपदद्विगुरिति असंज्ञात्वेऽपि न क्षतिः । पूर्वेस्त्रुतमित्यादौ संज्ञाभावेऽपि कालवाचकत्वात् समास । न चात्र दिग्विशेषबोधः उदयगिर्यादिसम्बद्धाया एव दिक्त्वात् एवं देशवाचकेनापि समास इति द्रष्टव्यम् ।

(७१) तद्धितार्थोत्तरेत्यादिसूत्रे वैषयिके आधारे सप्तमी । विषयत्वञ्चानेकविधमित्याह तद्धितार्थे विषये इत्यादि तद्धितार्थे वाच्ये इति तु नोक्तं पाञ्चनापितिरित्यादौ समासेनोक्तत्वात्तदुत्तरं तद्धितानुत्पत्तिप्रसङ्गात् । अतएव द्विगोर्लुगनपत्ये इति तद्धितस्य लुग्वचनं चरितार्थमन्यथा तदर्थस्य समासेनोक्ततयाऽप्रयोगात् तदनुत्पत्तौ कथं लोपः स्यात् । समाहारः समूहः स चावयवाभिन्नोऽपि बुद्धिकल्पितभेदवान् । अतएव समूहं प्रति तल्लोपसर्जनत्वं तेन पञ्चपूल्यादिसिद्धिः तत्र चाजाद्यन्तस्योपसर्जनत्वेन ह्रस्वे कृते एवादन्तत्वे सत्येव ङीपः प्रवृत्तेरित्यन्यत्र विस्तरः । अत्रेदं बोध्यं समूहस्य तद्धितार्थत्वेऽपि सामूहिकस्य तद्धितस्य लुकि पञ्चगवमित्यत्र गोरतद्धितलुकीति (१५६१०) टच् न स्यादिति विषये इत्युक्तमेवञ्च समाहारे वाच्ये इति तत्र पृथगुपादानसामर्थ्यादेव समासान्त इत्याशयेन वाच्ये इति व्याख्यानमिति । तथा च समासेनैव समाहारस्योक्तत्वात् न सामूहिकतद्धितोत्पत्तिरिति भावः ।

डवग्रहणं तु पक्षे नपुंसकत्वार्थम् अन्यथा परत्वात्पूर्ववद-श्ववडवाविति(३८९पृ०)स्यात् ।

**विप्रतिषिद्धञ्चानधिकरणवाचि । २ । ४ । १३ ।**

विरुद्धार्थानामद्रव्यवाचिनां(२६)द्वन्द्व एकवद्वा स्यात् । शीतोष्णं-शीतोष्णे । वैकल्पिकः समाहारः । द्वन्द्वः चार्थे(४३०पृ०)इति सूत्रेण प्राप्तः स विरुद्धार्थानां यदि भवति तर्हि अद्रव्यवाचिनामेवेति नियमार्थमिदम् । तेन(२७)द्रव्यवाचिनामितरेतर-योग एव । शीतोष्णे उदके स्तः । विप्रतिषिद्धमिति किम् नन्दक-पाञ्चजन्यौ । इह पाक्षिकसमाहारद्वन्द्वो भवत्येव ।

**न दधिपय आदीनि(२८) । २ । ४ । १४ ।**

एतानि नैकवत् स्युः । दधिपयसी । इध्माबर्हिषी । निपातना-द्दीर्घः । ऋक्सामे । वाङ्मनसे ।

---

(२६) अधिकरणमत्र द्रव्यं चकारो विभाषानुकर्षणार्थ इत्याशयेन व्याचष्टे अद्रव्येति । विरोधोऽत्र सहानवस्थानं तेन गुणपरत्वे शीतोष्णे शीतोष्णमेवं सुखदुःखे सुखदुःखमित्याद्युदाहरणम् ।

(२७) तेनेति विरुद्धार्थानां द्रव्यवाचिनामितरेतरयोग एव न समाहारे द्वन्द्व इत्यर्थः ।

(२८) दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राट्कौशिकौ प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्मा-बर्हिषी दीक्षातपसी श्रद्धातपसी मेधातपसी अध्ययनतपसी उलू-खलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे । एतानि दधिपय आदीनि । एषु गणेषु पठितानां येन केनचित् विधायकेन निपातनेन वाऽन्यथाविधानेऽपि तत्तत्कार्यं न भवतीत्यर्थः ।

**अधिकरणैतावत्त्वे च। २। ४। १५।**

द्रव्यसंख्यावगमे एकवदेवेति नियमो न (३९) स्यात्। दश दन्तोष्ठाः।

**विभाषा समीपे। २। ४। १६।**

अधिकरणैतावत्त्वस्य (४०) सामीप्येन परिच्छेदे समाहार एवेति उक्तरूपो नियमो वा स्यात्। उपदशम् दन्तोष्ठम्। उपदशाः दन्तोष्ठाः।

**आनङृतो द्वन्द्वे। ६। ३। २५।**

विद्यायोनिसम्बन्धवाचिनामृदन्तानां (४१) द्वन्द्वे आनङ् स्यादुत्तरपदे परे। होतापोतारौ। होतृपोतृनेष्टोद्गातारः।

---

(३९) इदञ्च चार्थे द्वन्द्व इति(४२०सू०)सामान्यतः प्राप्तस्य नियमप्राप्तस्य च द्वन्द्वस्य निषेधार्थमित्याह नियमो नेति।

(४०) समीपे इत्यस्य सामीप्येन परिच्छेदे बोध्या अनुवर्तमानाधिकरणैतावत्त्वे इत्यस्य च षष्ठ्या विपरिणाम इत्याशयेन व्याचष्टे अधिकरणेत्यादि। उपदशमिति नवैकादश वा दन्तोष्ठमित्यर्थः।

(४१) आनङिति ऋतो विद्यायोनिसम्बन्धेभ्यः(४६२सू०) इत्यतो विद्यायोनिसम्बन्धेभ्य इत्यनुवर्तते विभक्तिविपरिणामः विद्याकृतसम्बन्धः योनिकृतसम्बन्धश्चेति तदर्थः। अत्र ऋत इत्यस्य तत्र यथाश्रुतस्थितस्यापि पुनः ग्रहणम् उत्तरपदस्यापि विशेषणार्थमिति तेन पितृपितामहावित्यादौ नेति बोध्यम्। आनङो ङित्त्वादन्त्यादेशः नकारोपदेशस्तु उरण् रपर इति(४२सू०) रपरत्वनिवारणाय। अत्र च यथासङ्ख्यमन्वयात् विद्यासम्बन्धेन योनिसम्बन्धेन समासे आनङ् स्यादिति न, एकस्यैव समासेऽपरस्य समासाभावात्। तेन होतृपितरावित्यत्र पितृहोतारौ न।

## इद्वृद्धौ । ६ । ३ । २८ ।

वृद्धिमत्युत्तरपदे(४५)अग्नेरिदादेशः स्याद्देवताद्वन्द्वे । अग्नामरुतौ देवते अस्य आग्निमारुतं कर्म । अग्नीवरुणौ देवते अस्य आग्निवारुणं । देवताद्वन्द्वे(५।१२४सू०)चेत्युभयपदवृद्धिः अलौकिकवाक्ये (४६) आनङ्मीत्त्वञ्च बाधित्वा इत् । वृद्धौ किम् आग्नेन्द्रः । नेन्द्रस्य परस्य (५।११९सू०) इत्युत्तरपदवृद्धिनिषेधः । विष्णौ न * । आग्नावैष्णवम् (४७) ।

## दिवो द्यावा । ६ । ३ । २९ ।

देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावाक्षमे ।

## दिवसश्च पृथिव्याम् । ६ । ३ । ३० ।

दिव इत्येव चात् द्यावा । आदेशे अकारोच्चारणम्, सकारस्य रुत्वं (४८) मा भूदित्येतदर्थम् । द्यौश्च पृथिवी च दिव-

---

(४५) देवताद्वन्द्वे वृद्धिरूपोत्तरपदासम्भवात् वृद्धिपदस्य वृद्धिमति लक्षणया व्याचष्टे वृद्धिमतीति ।

(४६) अन्तरङ्गत्वात् पूर्वमानङीत्त्वे स्यातामत आहालौकिकवाक्य इति तद्धितार्थप्रकाशकालौकिकवाक्ये इत्यर्थः तथा च वृद्धिमत्त्वमुत्तरपरपदस्य भाव्येवेति नेष्टमिति भावः

(४७) अग्नावैष्णवमिति इदं प्रतिसिद्धे तयोरेकहविर्भोक्तृत्वेन साहचर्यात् देवताद्वन्द्वे च(४४१सू०)इत्यनेनानङ् ।

(४८) रुत्वमिति अकारे सति यथा सकारश्रवणं तथैव श्रवणं तेन प्रयोगकालेऽप्यविकृत एव सकारः श्रूयते इत्यर्थः ।

पृथिव्यौ द्यावापृथिव्यौ। छन्दसि दृष्टानुविधिः। द्यावा चिदस्मै(४९)पृथिवी। दिवस्पृथिव्योरवतिरित्यत्र पदकारा(५०) अविसर्गम्पठन्ति।

उषासोषसः। ६। ३। ३१।

उषस्शब्दस्योषासादेशो देवताद्वन्द्वे। उषासासूर्य्यम्।

मातरपितरावुदीचाम्। ६। ३। ३२।

मातरपितरौ (५१)। उदीचाङ्किम् मातापितरौ।

द्वन्द्वाच्चुदषहान्तात्समाहारे। ५। ४। १०६।

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक् च त्वक् च वाक्त्वचम् (५२)। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम् प्रावृट्शरदौ।

इति द्वन्द्वः।

---

(४९) द्यावाचिदस्मै इत्यत्र चिदस्मै इति पदद्वयव्यवधानेन समासाभावेऽपि वेदेऽयमादेश इत्यर्थः अस्मै इति सुपांसुलुगित्यादिना (उ५१७सू०) ङ्यम-शे अकाभ्य मित्यर्थः।

(५०) अविसर्गमिति क्वापि सविसर्गं नेत्यनुमेयमित्यर्थः।

(५१) मातरपितराविति एकशेषविकल्पे द्वन्द्वप्राप्तौ रूपमिदं मातुररङा-देशनिपातार्थञ्च।

(५२) वाक्त्वचमिति बहूनां द्वन्द्वे वाक्त्वक्त्वचमिति द्वन्द्वगर्भद्वन्द्वे तु वाक्स्रजत्वचमिति विशेषः। मनो०

तल्लक्षणः किम् (५) भागवित्तिभागवित्तिकौ (६) । कुत्स्नं किम् (७) गार्ग्यवात्स्यायनौ (८) ।

## स्त्री पुंवच्च ।१।२।६६।

यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् (९) । गार्गी च गार्ग्यायणौ(१०)च गार्ग्याः । अस्त्रियामित्यनुवर्त्तमाने(११) यञञोश्चेति (५०२सू०) लुक् । दाक्षी च दाक्षायणश्च दाक्षी ।

## पुमान् स्त्रिया(१२) ।१।२।६७।

---

(५) तल्लक्षणः किमिति तल्लक्षण एव किमिति प्रश्नार्थः ।

(६) भागवित्तस्य गोत्रापत्यं भागवित्तिरित्यस्मात् यूनि वृद्धाट्ठक् सौवीरेषु बहुलमिति(५१५सू०) कुत्सायां ठक् । इह कुत्सासौवीरत्वं वैरूप्यमपेक्ष्यते न तु युवत्वमात्रकृतं वैरूप्यमिति न प्रसङ्ग इति भावः ।

(७) कुत्स्नं किमिति । एवकारेण प्रकृत्यर्थस्यापि व्यावृत्तिः किमिति प्रश्नः ।

(८) गार्ग्यवात्स्यायनयोः प्रकृत्यंशे वैरूप्यं न प्रत्ययादिकृतमिति न प्रवृत्तिरत्राशयः ।

(९) स्त्रीत्वस्य वैरूप्यकारणस्याधिक्यात् पूर्वेणाप्राप्तौ वचनम् तल्लक्षणे-त्यादीत्यपि बध्यते तेन भागवित्तिकश्च गार्गी च वात्स्यायन-श्चेत्यादौ न ।

(१०) पुंवद्भावप्रयुक्तं वैलक्षण्यं स्फुटीकर्तुं द्विवचनान्तं न विग्रहवाक्ये गार्ग्याय-णाविति ।

(११) अत्र पुंवत्त्वातिदेशफलमाह अनुवर्त्तमाने इति अस्त्रियामित्यस्यानु-वृत्तिश्च तद्राजस्य बहुषु तेनैव स्त्रियामिति (५२०सू०) सूत्रादिति बोध्यः

(१२) चार्थकविभक्ता (८७सू०) विभक्त्यन्ते एकविभक्तौ तद्दिष्टकृतविरह-येदित्यर्थः । अतएव जननी परिच्छेदकयावच्छमातृत्वयोर्भेदेनान्यो-न्यैकविभक्तौ मातरौ मातापितराविति रूपभेदेन शिष्येयाताम् ।

स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत् (१३)। हंसी च हंसश्च हंसौ (१४)।

**भ्रातृपुत्रौ स्वसृदुहितृभ्याम् । १ । २ । ६८ ।**

भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ ।

**नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।१।२।६९।**

अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च (१५) वा एकवत् (१६) स्यात्तल्लक्षण एव विशेषश्चेत् । शुक्लः पटः शुक्ला पटी शुक्लं वस्त्रम् तदिदं शुक्लम् । तानीमानि शुक्लानि ।

**पिता मात्रा । १ । २ । ७० ।**

मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ मातापितरौ (१७) वा ।

---

(१३) तल्लक्षण एव विशेषश्चेदिति किम् इन्द्रेन्द्राण्यौ अत्रेन्द्राण्याः पुंयोगनिमित्तकविशेषात्र तल्लक्षणत्वम् ।

(१४) हंसाविति स्त्रीव्यक्तेरपि हंसत्वेन बोधाविशेषेऽपि स्त्रीत्वमात्रेण विशेषात् स्त्रीष् । अत्र च सरूपाणामेवेत्यनुवृत्तेर्वरटा च हंसश्चेत्यादौ विरूपैकशेषे नास्य प्रवृत्तिः ।

(१५) अन्यतरस्यामित्यस्यैकवचनमित्यनेनैव सम्बन्ध आनन्तर्यात् तथैकवच्चाद्वेत्याह तच्च वेति । अत्र अनपुंसकेनेति किं शुक्लं शुक्लश्च शुक्ले इति ।

(१६) एकवदिति अस्यैवैकवद्भावबोधनार्थमिदं तेनाव्ययभावो समाहारद्वन्द्वविषये न प्रवृत्तिस्तेन पटभित्यादि नेति बोध्यम् । अत्र तल्लक्षणकृत इति किं हिमहिमान्यौ अत्र महत्त्वादिकृतो विशेषः ।

(१७) मातापितराविति "पितुर्दशगुणं माता गौरवेणातिरिच्यते" इत्युक्तेर्मातुरभ्यर्हितत्वात् पूर्वनिपातः ।

## श्वशुरः श्वश्र्वा । १ । २ । ७१ ।

श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते तल्लक्षण एव विशेषश्चेत् । श्वशुरौ । श्वश्रूश्वशुरौ ।

## त्यदादीनि सर्वैर्नित्यम् । १ । २ । ७२ ।

सर्वैः(१८) सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते । स च देवदत्तश्च तौ । त्यदादीनां मिथः सहोक्तौ यत् परं (१९) तच्छिष्यते । स च यश्च यौ । पूर्वशेषोऽपि दृश्यते इति भाष्यम् । स च यश्च । तौ । त्यदादितः (२०) शेषे पुन्नपुंसकतो लिङ्गवचनानि* । सा च देवदत्तश्च । तौ । तच्च देवदत्तश्च यज्ञदत्ता च तानि । पुन्नपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते । तच्च देवदत्तश्च ते । अद्वन्द्वतत्पुरुष (२१) विशेषणानामिति वक्तव्यम्* । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तच्च सा च ते अर्द्धपिप्पल्यौ (२२) ।

---

(१८) सर्वैस्त्यदादिभिरन्यैश्च सार्थैः । सर्वैः किं प्रत्यासत्त्या त्यदादिभिरित्यर्थो मा भूत् ।

(१९) यत् परमिति गणीयपाठ परत्वम् द्विपर्यन्तानामिति नियमो नास्ति बहूनां च सर्वेषामिति भाष्योक्तेः ।

(२०) त्यदादित इति त्यदादीनां शेषे सह विवक्षिते यः पुमान् यच्च नपुंसकं तद्वशेन लिङ्गप्रतिपादकानि भवन्त्यर्थात् त्यदादीन्येवेत्यर्थः । पुन्नपुंसकत इत्युक्तेः स्त्रिया सहैकशेषेऽपि न तथेति भावः ।

(२१) अद्वन्द्वेति द्वन्द्वादिविशेषणानान्तु न प्राप्तं किन्तु विशेष्यनिघ्नतैवेति भावः ।

(२२) तच्च पिप्पल्याः अर्द्धं, सा च अर्द्धपिप्पलीति विग्रहः ।

## ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री । १ । २ । ७३ ।

एषु सह विवक्षायां स्त्री शिष्यते । पुमान् स्त्रिया (४४५सू०) त्यस्यापवादः । गाव इमाः । ग्राम्येति किम् रुरव इमे । पशुग्रहणं किम् ब्राह्मणा इमे । सङ्घेषु किम् एतौ गावौ । अतरुणेषु किम् वत्सा इमे । अनेकशफेष्विति वाच्यम् * । अश्वा इमे । इह सर्वत्र (२३) एकशेषे कृतेऽनेकसुबन्ताभावाद्द्वन्द्वो न । तेन (२४) शिरसी शिरांसीत्यादौ समासस्य (७५६सू०) त्यन्तोदात्तः प्राण्यङ्गत्वादेकवद्भावश्च (२५) न । पन्थानौ पन्थान इत्यादौ समासान्तो न ।

इत्येकशेषः ।

---

(२३) इह सर्वत्रेति अन्तरङ्गत्वात् समुत्पत्तेः प्रागेवैकशेष इत्यर्थः ।

(२४) तेनेति द्वन्द्वसमासत्वयोरभावेनेत्यर्थः ।

(२५) एकवदितिद्वन्द्वश्च प्राणी(४२२सू०)त्येतत्कृतनियम इत्यर्थः ।

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। परार्थाभिधानं (१) वृत्तिः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। स द्विधा लौकिकोऽलौकिकश्च। परिनिष्ठितत्वात्साधुर्लौकिकः। प्रयोगानर्होऽसाधुरलौकिकः। यथा राज्ञः पुरुषः। राजन् ङस् पुरुष सु इति। अविग्रहो(२)नित्यसमासः अस्वपदविग्रहो (३) वा। समासश्चतुर्विध इति प्रायोवादः अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारबहिर्भूतानामपि सह सुपेति(२।१।४०)विधानात्। पूर्वपदार्थप्रधानोऽव्ययीभावः उत्तरपदार्थप्रधानस्तत्पुरुषः अन्यपदार्थप्रधानो बहुव्रीहिः उभयपदार्थप्रधानो द्वन्द्वः इत्यपि प्रायः प्रवादः प्रायोऽभिप्रायः सूपप्रति (४) उन्मत्तगङ्गमित्याद्यव्ययीभावे, अतिमालादौ तत्पुरुषे, द्वित्रा इत्यादिबहुव्रीहौ, दन्तोष्ठमित्यादिद्वन्द्वे, चाभा-

---

(१) परार्थेति प्रत्ययार्थान्तर्भावेण परपदार्थान्तर्भावेण वा यो विशिष्टोऽर्थः स परार्थः सोऽभिधीयते येन तत्परार्थाभिधानम् इतरार्थान्वितस्वार्थबोधकोपस्थितिसाधनमित्यर्थः। एषु च अतिरिक्तशक्तिस्वीकारात् समुदाये वृत्तित्वारोपाद्वा वृत्तित्वव्यवहार औपचारिकः।

(२) अविग्रह इति लौकिकविग्रहरहित इत्यर्थः। नित्याधिकारीयसमासे समासघटकपदानां व्यपेक्षाया अभावेन लौकिकवाक्याभावादिति भावः। एवञ्च वृत्तेरेकार्थत्वबोधनं वृत्तिघटकपदस्वरूपबोधनं तदर्थबोधनं च विग्रहप्रदर्शनफलमिति बोध्यम्।

(३) अस्वपदेति समस्यमानयावत्पदाघटित इत्यर्थः।

(४) सूपप्रत्यादौ पूर्वपदार्थप्रधानत्वाभावात् अतिमालादौ पूर्वपदार्थप्राधान्येनोत्तरपदार्थप्राधान्याभावात् द्वित्रा इत्यादावन्यपदार्थप्रधानत्वाभावात् दन्तोष्ठमित्यादौ समूहस्यैव प्राधान्याच्च तत्तल्लक्षणाव्याप्तिरिति भावः।

त्वात्। तस्य च विशेषः कर्मधारयः तद्विशेषो द्विगुः। अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव तत्पुरुषस्य क्वचिदे (५) वेत्युक्तम्। (११।४०) किञ्च(६)

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः॥ १॥

सुपां, सुपा। राजपुरुषः। तिङा। पर्य्यभूषयत्। नाम्ना। कुम्भकारः। धातुना। कटप्रूः। अजस्रम्। तिङां तिङा। पिबतखादता खादतमोदता। तिङां सुपा। कृन्तविचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा। एहीडादयोऽन्यपदार्थे चेति(२६८४०)मयूरव्यंसकादौ पाठात्समासः।

इति सर्व्वसमासशेषः।

---

(५) क्वचिदिति शङ्कुलाखण्डादावित्यर्थः एतेनैतेषां प्रायोवादत्वेन न विभाजकत्वमिति भावः।

(६) सिद्धान्ते समासविभाजकोपाधिर्नास्त्येव। तत्रापरितोषादिदं कारिकोक्तसंगृहीतानि लक्षणेनापि किञ्चेति। सुपामिति चतुर्षु संख्याते अधिकारात्(२२०४०)प्राक्।

## ऋक्पूरब्धूःपथामानक्षे। ५।४।७४।

अ अनक्षे इति छेदः। ऋगाद्यन्तस्य(१) समासस्य अप्रत्ययोऽन्तावयवः स्यात्। अक्षे या धूः तदन्तस्य तु न। अर्धर्चः। अनृचबह्वृचावध्येतर्य्येव(२)। नेह। अनृक् साम। बह्वृक् सूक्तम् विष्णोः पूः विष्णुपुरम्। क्लीवत्वं लोकात्। विमलापं सरः।

## द्व्यन्तरुपसर्गेभ्योऽप ईत्। ६।३।९७।

अप इति कृतसमासान्तस्यानुकरणम् षष्ठ्यर्थे प्रथमा। एभ्योऽपस्य ईत्स्यात्। द्विर्गता आपो यस्मिन्निति द्वीपम्। अन्तरीपम् (३)। प्रतीपम् समीपम्। समापो देवयजनमिति तु समा (४) आपो यस्मिन्निति बोध्यम्। कृतसमासान्तग्रहणादिह। स्वप्। स्वपौ। अवर्णान्ताद्वा*। प्रेपम् प्रापम्। परेपम् परापम्।

## ऊदनोर्देशे। ६।३।९८।

---

(१) साधारणसमासान्ताभावाद् ऋगित्यादि अक्षे येति अक्षसंबन्धिनी या धूरित्यर्थः सम्बन्धिनोऽधिकरणत्वविवक्षया सप्तमी। वोढत्वादस्य दृढस्य धूरित्वनेनैव सम्बन्धः।

(२) अध्येतर्य्येवेति अध्येतृत्वयोग्यतावत इत्यर्थः। अध्ययनं चोपस्थितत्वादृक्सम्बन्ध्येव।

(३) अन्तरीपमित्यादिरिव कस्य अन्तर्गताः, प्रतिकूलाः सङ्गता वापो यस्मिन्निति विग्रहत्रयम्।

(४) समा इत्युक्त्या उपसर्गत्वाभावेन सूत्रस्यादित्यादिप्रवृत्त्यभावो दर्शितः।

अनोः परस्यापस्य ऊत्स्याद्देशे अनूपो देशः। राजधुरा।

अक्षे तु। अक्षधूः दृढधूरक्षः। सखिपथो रम्यपथो देशः।

**अच् प्रत्यन्ववपूर्वात्सामलोम्नः। ५। ४। ७५।**

एतत्पूर्वात्सामलोमान्तात्समासादच् स्यात्। प्रतिसामम्। अनुसामम्। अवसामम्। प्रतिलोमम्। अनुलोमम्। कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते (५)। कृष्णभूमः। उदग्भूमः। पाण्डुभूमः। द्विभूमः प्रासादः। संख्याया नदीगोदावरीभ्यां च*। पञ्चनदम्। सप्तगोदावरम्। अजिति योगविभागादन्यत्रापि। पद्मनाभः।

**अक्ष्णोऽदर्शनात्। ५। ४। ७६।**

अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः। गवामक्षीव (६) गवाक्षः।

**अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः। ५। ४। ७७।**

---

(५) अच्प्रत्यन्ववादिति सूत्रेऽजिति योगविभागात् विषयभेदे स दृश्यते तेन कृष्णभूमेत्यादिविधिरित्याशयेनाह कृष्णोदगित्यादि।

(६) कारणल्युडन्तदर्शनशब्दो योगरूढिभ्यां चक्षुःपरस्तत्पर्युदासेऽक्षिपदं तत्सदृशपरमित्याशयेनाह गवामक्षीव।

एते पञ्चविंशतिरजन्ता निपात्यन्ते। आद्यास्त्रयो बहुव्रीहयः। अविद्यमानानि चत्वार्यस्य अचतुरः। विचतुरः। सुचतुरः। त्रुपाभ्याञ्चतुरोऽजिष्यते। त्रिचतुरः। चतुर्णां समीपे उपचतुराः। तत एकादश द्वन्द्वाः। स्त्रीपुंसौ। धेन्वनडुहौ। ऋक्सामे। वाङ्मनसे। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवन्तौ(७) च ऊर्वष्ठीवम्। निपातनाट्टिलोपः। पदष्ठीवम्। निपातनात्पादशब्दस्य पद्भावश्च। नक्तञ्च दिवा च नक्तन्दिवम्। रात्रौ च दिवा च रात्रिन्दिवम्। रात्रेर्मान्तत्वन्निपात्यते। अहनि च दिवा च अहर्दिवम्। वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनीत्यर्थः। सरजसमिति साकल्येऽव्ययीभावः। बहुव्रीहौ तु। सरजः पङ्कजम्। निश्चितं श्रेयः निःश्रेयसम्। तत्पुरुष एव नेह। निःश्रेयान् पुरुषः पुरुषस्यायुः पुरुषायुषम्। ततो द्विगुः। द्व्यायुषम्। त्र्यायुषम्। ततो द्वन्द्वः। ऋग्यजुषम्। ततस्त्रयः कर्मधारयाः। जातोक्षः। महोक्षः। वृद्धोक्षः। शुनः समीपम् उपशुनम्। टिलोपाभावः सम्प्रसारणञ्च निपात्यते। गोष्ठेऽश्वा गोष्ठश्वः।

**ब्रह्महस्तिभ्यां वर्चसः। ५। ४। ७८।**

अच् स्यात्। ब्रह्मवर्चसम्(८)। हस्तिवर्चसम्। पल्यराजभ्याञ्चेति वक्तव्यम् *। पल्यवर्चसम्।

---

(७) जानूरुपर्व्वाष्ठीवदस्त्रियाम्।

(८) ब्रह्म वर्चसमित्यत्र षष्ठीतत्पुरुषः।

अवसमन्धेभ्यस्तमसः । ५ । ४ । ७९ ।

अवतमसम् (९) । सन्तमसम् । अन्धयतीत्यन्धम् । पचाद्यच् । अन्धन्तमः अन्धतमसम् ।

श्वसो वसीयःश्रेयसः । ५ । ४ । ८० ।

वसुशब्दः प्रशस्तवाची । तत ईयसुनि वसीयः । श्वःशब्द उत्तरपदार्थप्रशंसामाशीर्विषयतामाह । मयूरव्यंसकादित्वात्समासः श्वोवसीयसम् । श्वःश्रेयसन्ते भूयात् ।

अन्ववतप्ताद्रहसः । ५ । ४ । ८१ ।

अनुरहसम् । अवरहसम् । तप्तरहसम् (१०) ।

प्रतेरुरसः सप्तमीस्थात् । ५ । ४ । ८२ ।

उरसि प्रति प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः ।

अनुगवमायामे । ५ । ४ । ८३ ।

एतन्निपात्यते दीर्घत्वे । अनुगवं यानम् । यस्य चायाम इति (३३०पृ०) समासः ।

द्विस्तावा त्रिस्तावा वेदिः । ५ । ४ । ८४ ।

---

(९) अवहीनं सन्ततञ्च तम इति विग्रहे क्रमेण अवतमसं सन्तमसमिति अन्धं गाढमिति कथितार्थः ।

(१०) अनुगतमवहीनं च रह इति माधवनाथः तप्तमिव रहः यथोक्तम् ।

परेषामधिगम्यं हि यद्गुह्यं तद्विविक्तवत् ।

तप्तं च गह्वरं चेति तद्रहस्यं विदुरिति ।

अच्प्रत्ययष्टिलोपः समासश्च निपात्यते । यावती प्रकृतो वेदिः ततो (११) द्विगुणा त्रिगुणा वाऽग्निमेधादौ तत्रेदन्निपातनम् । वेदिरिति किम् द्विस्तावती त्रिस्तावती रज्जुः ।

उपसर्गादध्वनः । ५ । ४ । ८५ ।

प्रगतोऽध्वानम् प्राध्वो रथः ।

न पूजनात् । ५ । ४ । ६९ ।

पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा । स्वतिभ्यामेव* । नेह । परमराजः । पूजनात्किम् । गामतिक्रान्तोऽतिगवः । बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः (४।५४०) प्रागेवायं (१२) निषेधः । नेह । सुसक्थः, स्वक्षः ।

किमः क्षेपे । ५ । ४ । ७० ।

क्षेपे यः किम्शब्दस्ततः परं यत्, तदन्तात्समासान्ता न स्युः । कुत्सितो राजा । किंराजा । किंसखा । किंगौः । क्षेपे किम् किंराजः । किंसखः । किंगवः ।

नञस्तत्पुरुषात् । ५ । ४ । ७१ ।

---

(११) द्विराहत्ता तावतीत्यर्थे सुच् आहत्तिक्रियाध्याहारेण पूर्वपदस्य वृत्तिः । द्विगुणेति फलितवचनम् ।

(१२) इत आरभ्य प्रागिति । प्राग्बहुव्रीहिपदमर्थं व्यक्तं अभिमति* वार्तिकोक्ते-रिति भावः ।

समासान्तो न। अराजा। असखा। तत्पुरुषात्किम् अधुरं शकटम्।

पथो विभाषा। ५। ४। ७२।

नञ्पूर्वात्पथो वा समासान्तः। अपथम्। अपन्थाः। तत्पुरुषादित्येव। अपथो देशः अपथं वर्त्तते।

इति समासान्ताः।

———

**अलुगुत्तरपदे (१)। ६। ३। १।**

अलुगधिकारः प्रागानङः। उत्तरपदाधिकारस्त्वा पादसमाप्तेः।

**पञ्चम्याः स्तोकादिभ्यः। ६। ३। २।**

एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे। स्तोकान्मुक्तः। एवम् (२) अन्तिकार्थदूरार्थकृच्छ्रेभ्यः। उत्तरपदे किम्? निःक्रान्तः स्तोकात् निःस्तोकः। ब्राह्मणाच्छंसिन उपसंख्यानम् *। ब्राह्मणे विहितानि शस्त्राणि उपचारात् ब्राह्मणानि तानि शंसतीति। ब्राह्मणाच्छंसीति ऋत्विग्विशेषः। द्वितीयार्थे पञ्चमी उपसंख्यानादेव।

**ओजःसहोऽम्भस्तमसस्तृतीयायाः। ६। ३। ३।**

ओजसा कृतमित्यादि। अञ्जस उपसंख्यानम् *। अञ्जसा कृतम्। आर्जवेन कृतमित्यर्थः। पुंसानुजो(३)जनुषान्ध इति च*। यस्याग्रजः पुमान् स पुंसानुजः। जनुषान्धः जात्यन्धः।

**मनसः संज्ञायाम्। ६। ३। ४।**

---

(१) उत्तरपदशब्दः समासचरमावयवे रूढः। समासप्रयोजनं तु स्तोकान्मुक्तस्यापत्यं स्तौकान्मुक्तिरित्यादिसिद्धिः।

(२) इह स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेनेति (२।१।३९) समासशास्त्रे ये पठितास्त एवादिशब्देनेह गृह्यन्त इति सूचयन्नाह एवमिति।

(३) पुंसानुजः पुंसा हेतुनानुज इत्यर्थः। जनुषान्धः जन्महेतुनान्धो जात्यन्ध इत्यर्थः।

मनसागुप्ता ।

**आज्ञायिनि च । ६ । ३ । ५ ।**

मनस इत्येव । मनसा ज्ञातुं शीलमस्य मनसाज्ञायी ।

**आत्मनश्च । ६ । ३ । ६ ।**

आत्मनस्तृतीयाया अलुक् स्यात् । पूरणे(४) इति वक्तव्यम्* । पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः । आत्मनापञ्चमः । "जनार्दनस्त्वात्मचतुर्थ एवेति," बहुव्रीहिर्बोध्यः । पूरणे किम् ? आत्मकृतम् ।

**वैयाकरणाख्यायां चतुर्थ्याः । ६ । ३ । ७ ।**

आत्मन इत्येव । आत्मनेपदम् । आत्मनेभाषा (५) तादर्थ्ये चतुर्थी । चतुर्थीति(२४१पृ०)योगविभागात्समासः ।

**परस्य च । ६ । ३ । ८ ।**

परस्मैपदम् । परस्मैभाषा ।

---

(४) पूरणे इति स्वरितत्वबलात्तदधिकारविहितप्रत्ययग्रहणमित्याह पूरणे इति तस्य पूरणे (६७०पृ०) इत्यधिकृतविहितप्रत्ययान्त इत्यर्थः ।

(५) आत्मनेभाषेति धातुखिलगणोणादिलिङ्गसूत्रपाठात्मकं पञ्चप्रस्थानं व्याकरणं तत्र धातुपाठे भाषाशब्दस्य दर्शनात् वैयाकरणत्वम् वैयाकरणाख्यायामित्यत्र पूर्वसूत्रस्थस्यैवात्मन इत्यस्यानुवृत्तिर्बोध्येत्याशयेनाह आत्मन इत्येवेति प्रकृतिविकृतिभावाभावेन चतुर्थीसमासाभावमाशङ्क्याह योगविभागादिति ।

**हलदन्तात्सप्तम्याः संज्ञायाम् । ६ । ३ । ९ ।**

हलन्तादद‍न्ताच्च सप्तम्या अलुक् संज्ञायाम् । त्वचिसारः ।

**गवियुधिभ्यां स्थिरः । ८ । ३ । ९५ ।**

आभ्यां स्थिरस्य सस्य षः स्यात् । गविष्ठिरः । अत्र गवीति(६) वचनादेवालुक् । युधिष्ठिरः । अरण्येतिलकाः । अत्र संज्ञायामिति(३५२पृ०) सप्तमीसमासः । 'हृद्द्युभ्यां च *' । हृदिस्पृक्(७) । दिविस्पृक् ।

**कारनाम्नि च प्राचां हलादौ । ६ । ३ । १० ।**

प्राचां देशे यत्कारनाम(८) तत्र हलादावुत्तरपदे हलदन्तात्सप्तम्या अलुक् । मुकुटेकार्षापणम् । दृषदिमाषकः । पूर्वेण सिद्धे नियमार्थम् । कारनाम्न्येव प्राचामेव हलादावेवेति । कारनाम्नि किम् । अभ्यर्हितपशुः । कारादन्यस्यैतद्यस्य नाम । प्राचां किम् । यूथपशुः(९) । हलादौ किम् । अविकटोरणः(१०) । हलदन्तात्किम् । नद्यां दोहः नदीदोहः(११) ।

---

(६) गवीत्यत्र अवादेशात् पूर्वं लुक् प्राप्तौ हलन्तत्वाभावेन हलदन्तादित्यस्याप्राप्तेरत आह गवीतिवचनादेवेति ।

(७) हृदीति अलुग्विधिज्ञापकात् कर्मणीयं सप्तमी ।

(८) वणिक्पशुपालकर्षकेभ्यो राजग्राह्यो भागः करः स एव कारः ।

(९) यूथपशुः यूथे पशुरूप उदग्देशे कररूपेण देय इति न तत्रालुक् ।

(१०) अविभ्यस्त्वात् सङ्घाते कटच्प्रत्ययः उरणो मेषः अविकटे उरण इति विग्रहे तत्र हलादित्वाभावान्नालुक् । सप्तमीति (३५१पृ०) योगविभागात् समासः ।

(११) नद्यामिति नद्युत्पन्ने देयः दोहरूपः कर इत्यर्थः ।

**मध्याद्गुरौ। ६। ३। ११।**

मध्येगुरुः। अन्ताच्च*। अन्तेगुरुः।

**अमूर्धमस्तकात् स्वाङ्गादकामे। ६। ३। १२।**

कण्ठेकालः। उरसिलोमा। अमूर्धमस्तकात्किम् मूर्धशिखः। मस्तकशिखः। अकामे किम् मुखे कामोऽस्य मुखकामः।

**बन्धे च विभाषा। ६। ३। १३।**

हलदन्तात्सप्तम्या अलुक्। हस्तेबन्धः—हस्तबन्धः। हलदन्तेति किम् गुप्तिबन्धः।

**तत्पुरुषे कृति बहुलम्। ६। ३। १४।**

स्तम्बेरमः–स्तम्बरमः। कर्णेजपः–कर्णजपः। क्वचिन्न (१२)। कुरुचरः।

**प्रावृट्शरत्कालदिवां जे। ६। ३। १५।**

प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यायं प्रपञ्चः।

**विभाषा वर्षक्षरशरवरात्। ६। ३। १६।**

---

(१२) तत्पुरुषे कृति [illegible] हलदन्तादित्यस्यानुवर्तनेऽपि नैतस्य सार्वत्रिकत्वं [illegible] न भविष्यतीति ध्वनयन्नाह क्वचिन्नेति तेन गोषु चर इति वाक्ये गोचर इत्यादि सिद्धिः।

एभ्यः सप्तम्या अलुक् जे। वर्षेजः-वर्षजः। क्षरेजः-क्षरजः। शरेजः शरजः। वरेजः वरजः।

**घकालतनेषु(१२)कालनाम्नः। ६। ३। १७।**

सप्तम्या विभाषा लुक् स्यात्। घ। पूर्वाह्णेतरे-पूर्वाह्णतरे। पूर्वाह्णेतमे—पूर्वाह्णतमे। काल। पूर्वाह्णेकाले—पूर्वाह्ण-काले। तन। पूर्वाह्णेतने—पूर्वाह्णतने।

**शयवासवासिष्वकालात्। ६। ३। १८।**

खेशयः-खशयः। ग्रामेवासः-ग्रामवासः। ग्रामेवासी-ग्राम-वासी। हलदन्तादित्येव। भूमिशयः। अपो योनियन्म-तुषु*। अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः। अप्सु भवोऽप्सव्यः। अप्सु मन्तावाऽऽज्यभागौ।

**नेन्सिद्धबध्नातिषु च। ६। ३। १९।**

इन्नन्तादिषु सप्तम्या अलुक्। स्थण्डिलशायी। साङ्काश्य-सिद्धः चक्रबद्धः।

**स्थे च भाषायाम्। ६। ३। २०।**

सप्तम्या अलुक्। समस्थः। भाषायां किम् कृष्णोऽस्याखरेष्ठः।

**षष्ठ्या आक्रोशे। ६। ३। २१।**

---

(१२) घशब्देन तरप्तमपौ गृह्येते तरप्तमपौ घः इति (७०४०) सूत्र-शास्त्रसंज्ञात्वात्। [illegible]।

चौरस्यकुलम् । आक्रोशे किम् ब्राह्मणकुलम् वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु * । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । (१४) । आमुष्यायणाऽऽमुष्यपुत्रिकाऽऽमुष्यकुलिकेति च * । अमुष्यापत्यम् । आमुष्यायणः । नडादित्वात् (४८८पृ०)फक् । अमुष्यपुत्रस्य भाव आमुष्यपुत्रिका । मनोज्ञादि(६५७पृ०)त्वाद्वुञ् । एवमामुष्यकुलिका । देवानां प्रिय(१५) इति च मूर्खे * । अन्यत्र देवप्रियः । शेपपुच्छलाङ्गूलेषु शुनः * । शुनःशेपः (१६) । शुनःपुच्छः । शुनोलाङ्गूलः । दिवश्च दासे * । दिवोदासः ।

## पुत्रेऽन्यतरस्याम् । ६ । ३ । २२ ।

षष्ठ्याः पुत्रे परेऽलुग्वा निन्दायाम् । दास्याःपुत्रः दासीपुत्रः । निन्दायां किम् ब्राह्मणीपुत्रः ।

## ऋतो विद्यायोनिसम्बन्धेभ्यः । ६ । ३ । २३ ।

विद्यासम्बन्धयोनिसम्बन्धवाचिन ऋदन्तात् षष्ठ्या अलुक् । होतुरन्तेवासी होतुःपुत्रः । पितुरन्तेवासी पितुःपुत्रः (१७) ।

---

(१४) पश्यतोहर इति पश्यन्तमनादृत्यैवार्थः षष्ठी चानादरे इति(२१०पृ०)षष्ठी ।

(१५) देवानामिति यजन्ते हि देवानां प्रीतिं जनयन्ति इति तत् प्रियास्तथा च तत् प्रियत्वेन यज्वत्वता प्रतीयते इति यज्वन्यपूर्वं इत्यर्थः ।

(१६) शुन इव शेपोऽस्य शुनः शेपः एवं पुच्छलाङ्गूलाभ्यामपि बहुव्रीहिः एते च बहुव्रीहिप्रक्रिया अभिप्रेताः ।

(१७) पितुः पुत्रः प्रत्यासत्त्या पितृस्वत्व इत्यर्थः ।

विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदे(१८) वक्तव्यम् *। नेह। होतृधनम्।

विभाषा स्वसृपत्योः। ६। ३। २४।

ऋदन्तात् षष्ठ्या अलुक् वा स्वसृपत्योः परयोः।

मातुःपितृभ्या(१९)मन्यतरस्याम् ।८। ३।८५।

आभ्यां स्वसुः सस्य षो वा स्यात् समासे। मातुःष्वसा-मातुःस्वसा। पितुःष्वसा पितुःस्वसा। लुक्पक्षे तु।

मातृपितृभ्यां स्वसा। ८। ३। ८४।

आभ्यामपरस्य स्वसुः सस्य षः स्यात् समासे। मातृष्वसा। पितृष्वसा। असमासे तु (२०)। मातुः स्वसा। पितुः स्वसा।

इत्यलुक्समासः।

---

(१८) तत्पूर्वोत्तरेति। विद्यायोनिसम्बन्धवाचकात्तत्पूर्वोत्तरपदस्य षष्ठ्यन्तस्य अलुक् होतुः पुत्र इत्यादि चित्रम्।

(१९) मातुःपितृभ्यामिति रेफान्ताभ्यामुच्चरणं विसर्गादावपि कृते विकल्पार्थम् ...तत्पदमस्तीति बोधनाय।

(२०) मातुःपितृभ्यामिति सूत्रे समास इत्यनुवर्तितं तत्फलमाह असमासे त्विति।

**घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः। ६। ३। ४३।**

भाषितपुंस्काद्यो ङी तदन्तस्याऽनेकाचो ह्रस्वः स्याद् घरूपकल्पप्रत्ययेषु (१) चेलडादिषु चोत्तरपदेषु परेषु। ब्राह्मणितरा (२)। ब्राह्मणितमा। ब्राह्मणिरूपा। ब्राह्मणिकल्पा। ब्राह्मणिचेली। ब्राह्मणिब्रुवा। ब्राह्मणिगोत्रेत्यादि। ब्रुवः पचाद्यचि वचादेशगुणयोरभावोऽपि निपात्यते। चेलडादीनि वृत्तिविषये कुत्सनवाचीनि। तैः कुत्सितानि कुत्सनैरिति(७५८४०)समासः। ङ्यः किम् दत्तातरा। भाषितपुंस्कात्किम् आमलकीतरा (३)। कुवलीतरा(४)।

**नद्याः शेषस्यान्यतरस्याम्। ६। ३। ४४।**

अङ्यन्तनद्याः ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात्। ब्रह्मबन्धुतरा ब्रह्मबन्धूतरा। स्त्रितरा(५)स्त्रीतरा। कृन्नद्या न *। लक्ष्मीतरा।

---

(१) उत्तरपदाधिकारे कपिञ्जलन्यायत्वे तरप्प्रभृतयं नाऽत्रेत्याशयेनाह प्रत्ययेष्विति।

(२) ब्राह्मणितरेति जातिलक्षणङीनुप्रत्ययान्तत्वान्न जातेश्चेति (७०८४०) निषेधात् तसिलादिष्विति (७०५४०) पुंवद्भावो नेति बोध्यम्।

(३) आमलकीशब्दो वृक्षे नित्यस्त्रीलिङ्गः कुवलीशब्दोऽपि तथेत्याशयेनोदाहरणम्। बालो०

(४) आमलक्यादयो भाषितपुंस्का नेत्यस्येदाह कुवलीति। शब्देन्दु०

(५) नद्याः इत्यत्र भाषितपुंस्कादितीह न सम्बध्यते इत्याशयेनोदाहरति स्त्रितरेति।

उगितश्च । ६ । ३ । ४५ ।

उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् । विदुषितरा । ह्रस्वाभावपक्षे तसिलादिष्विति(४०पृ०)पुंवत् । विद्वत्तरा । इत्यादिषु विदुषीतरेत्यप्युदाहृतं तन्निर्मूलम्(६) ।

हृदयस्य(७)हृल्लेखयदण्लासेषु । ६।३।५० ।

हृदयं लिखतीति हृल्लेखः । हृदयस्य प्रियम् हृद्यम् । हृदयस्येदम् हार्दम् । हृल्लासः । लेख इत्यणन्तस्य ग्रहणम् । घञि तु । हृदयलेखः । लेखग्रहणमेव ज्ञापकम् (८) । उत्तरपदाधिकारे तदन्तविधिर्नास्तीति ।

वा शोकष्यञ्रोगेषु । ६ । ३ । ५१ ।

हृच्छोकः—हृदयशोकः । सौहार्द्यम् —सौहृद्यम् । हृद्रोगः—हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति तेन सिद्धे प्रपञ्चार्थ (९) मिदम् ।

---

(६) निर्मूलमिति नहि ह्रस्वप्रवर्त्तनाभावेऽपि स्त्रियाः पुंवत्त्वं बाधते इति व्याख्यानमेवेति भावः ।

(७) हृच्छब्देनैव हृद्यादिपदसिद्धौ सूत्रमिदं हृदयलेखादिप्रयोगवारणार्थम् ।

(८) ज्ञापकमिति उत्तरपदं विशेष्यं कृत्वा तदन्तविधिर्नास्ति एवञ्च तदन्ते उत्तरपदे हृदादेशो न भवति ।

(९) प्रपञ्चार्थमिति अत्र प्रयोगद्वयमपि हृदयशब्दप्रयोग एवेति प्रपञ्चार्थमिति भावः ।

पादस्य पदाऽऽज्यातिगोपहतेषु । ६ । ३ । ५२ ।

एषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः(१०)स्यात् । पादाभ्यामजतीति पदाजिः पदातिः । अज्यतिभ्यां च पादे चेतीण्(७४२२५०)प्रत्ययः अजेर्व्यभावो निपातनात् । पदगः । पदोपहतः

पद्यत्यतदर्थे । ६ । ३ । ५३ ।

पादस्य पत्स्यादतदर्थे यति परे । पादौ विध्यन्ति पद्याः शर्कराः । अतदर्थे किम् पादार्थमुदकम्पाद्यम् । पादार्घाभ्याञ्चेति(७२१५०)यत् । इके चरतावुपसंख्यानम् * । पादाभ्यां चरति पदिकः । पर्पादित्वात्(६०६५०)ष्ठन् ।

हिमकाषिहतिषु च । ६ । ३ । ५४ ।

पद्धिमम् । पत्काषी(११) । पद्धतिः ।

ऋचः शे । ६ । ३ । ५५ ।

ऋचः पादस्य (१२) पत्स्याच्छे परे । गायत्र्या ऋचः शंसति पादम्पादमित्यर्थः । ऋचः किम् पादशः कार्षापणन्ददाति ।

वा घोषमिश्रशब्देषु । ६ । ३ । ५६ ।

---

(१०) उत्तरसूत्रे पद्भावस्याकारान्त परेऽस्य [illegible] सुप्तविभक्तिकत्वादयमेवादन्त आदेश इति ।

(११) पत्काषीति [illegible] णिनिः पद्भ्यां [illegible] ।

(१२) ऋच इति ऋचः [illegible] पादशब्दः पूर्वत्र तु सर्वत्र [illegible] गीति विवेकः ।

पादस्य-पत् । पद्घोषः-पादघोषः । पन्मिश्रः पादमिश्रः । पच्छब्दः-पादशब्दः । निष्के चेति वाच्यम् * । पन्निष्कः-पादनिष्कः ।

**उदकस्योदः संज्ञायाम् । ६ । ३ । ५७ ।**

उदमेघः । उत्तरपदस्य चेति वक्तव्यम् * । क्षीरोदः ।

**पेषंवासवाहनधिषु च । ६ । ३ । ५८ ।**

उदपेषम्पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः । समुद्रे तु पूर्वेण सिद्धम् ।

**एकहलादौ(१३)पूरयितव्येऽन्यतरस्याम् । ६ । ३ । ५९ ।**

उदकुम्भः-उदककुम्भः । एकेति किम् उदकस्थाली । पूरयितव्ये इति किम् उदकपर्वतः ।

**मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च । ६ । ३ । ६० ।**

उदमन्थः-(१४) उदकमन्थः । उदौदनः-उदकौदनः ।

---

(१३) एकहलादाविति एकहल्लोऽवयवावयवी एकसंख्याग्राही च तथा च यत्र सजातीयो हलेव व्यवधीयते तथाविधहलवदर्थे वर्तते तत्रैवाय मविधिरिति भावः । पूरयितव्यं पूरणार्हम् ।

(१४) उदकस्य इति [illegible] ततः [illegible] प्रवर्तते । मनो°

## इको ह्रस्वोऽङ्यो गालवस्य । ६ । ३ । ६१ ।

इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणीपुत्रः ग्रामणिपुत्रः । इकः किम् रमापतिः । अङ्य इति किम् गौरीपतिः । गालवग्रहणं पूजार्थम् अन्यतरस्यामित्यनुवृत्तेः । इयङुवङ्भाविनामव्ययानाञ्च नेति वाच्यम् * । श्रीमदः । भ्रूभङ्गः । शुक्लीभावः(१५) । भ्रुकुंसादीनामिति वक्तव्यम् * । भ्रूकुंसः भ्रुकुंसः । भ्रूकुटिः भ्रुकुटिः । अकारोऽनेन विधीयत इति व्याख्यान्तरम् । भ्रकुंसः । भ्रकुटिः । भ्रुवा कुंसा भाषणं शोभा वा यस्य । स्त्रीवेषधारी नर्त्तकः । भ्रुवः कुटिः कौटिल्यम् ।

## एक तद्धिते च । ६ । ३ । ६२ ।

एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च । एकस्या आगतम् । एकरूप्यम् । एकक्षीरम् ।

## ङ्यापोः संज्ञाछन्दसोर्बहुलम् । ६ । ३ । ६३ ।

रेवतिपुत्रः । अजक्षीरम् ।

## त्वे च । ६ । ३ । ६४ ।

त्वप्रत्यये ङ्यापोर्वा ह्रस्वः । अजत्वम् अजात्वम् रोहिणित्वम् रोहिणीत्वम् ।

---

(१५) शुक्लीभाव इत्यत्र शुक्लीशब्दस्य च्विप्रत्ययान्तत्वादव्ययत्वाच्च न ह्रस्वः ।

## ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे। ६।१।१३।

ष्यङन्तस्य पूर्वपदस्य सम्प्रसारणं स्यात्पुत्रपत्योरुत्तरपदयो-स्तत्पुरुषे।

## सम्प्रसारणस्य। ६।३।१३९।

सम्प्रसारणस्य दीर्घः (१६)। स्यादुत्तरपदे। कौमुदगन्ध्यायाः पुत्रः। कौमुदगन्धीपुत्रः (१७)। कौमुदगन्धीपतिः। व्यव-स्थितविभाषया ह्रस्वो न। स्त्रीप्रत्यये चानुपसर्जने नेति तदादिनियमप्रतिषेधात्। परमकारीषगन्धीपुत्रः। उपस-र्जने तु तदादिनियमादेव। अतिकारीषगन्ध्यापुत्रः (१८)।

## बन्धुनि बहुव्रीहौ। ६।१।१४।

बन्धुशब्दे उत्तरपदे ष्यङः सम्प्रसारणं स्याद्बहुव्रीहौ। कारी-षगन्ध्या बन्धुरस्येति। कारीषगन्धीबन्धुः। बहुव्रीहाविति किम्‌ कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः। क्लीबनिर्दे-शस्तु शब्दस्वरूपापेक्षया। मातच्‌ मातृकमातृषु वा *।

---

(१६) सम्प्रसारणस्येत्यत्र ढ्लोपे इत्यतो दीर्घः (८०पृ०) इत्यनुवर्त्तते उत्तरपदे (४५७पृ०) इत्यधिकाराल्लब्धम्।

(१७) कुमुदगन्धेरपत्यं स्त्रीत्वं ष्यङि यङश्चाबिति (२५२पृ०) चाबन्तेऽपि ष्यङन्तत्वात् सम्प्रसारणम्।

(१८) अतिकारीषेति अत्यादय इति (२७६पृ०) समासे गुणवत्पुरुषे ष्यङन्तं न पूर्वपदमिति भावः।

कारीषगन्ध्यामातः कारीषगन्धीमातः। कारीषगन्ध्यामातृकः- कारीषगन्धीमातृकः। कारीषगन्ध्यामाता—कारीषगन्धीमाता। अस्मादेव निपातनान्मातृशब्दस्य मातजादेशो नद्यृतश्चेति(४०४०)कब्विकल्पश्च बहुव्रीहावेवेदम्। नेह। कारीषगन्ध्याया माता। कारीषगन्ध्यामाता चित्स्वसामर्थ्याच्चित् स्वरो बहुव्रीहिस्वरं बाधते।

इष्टकेषीकामालानां चिततूलभारिषु।६।३।६५।

इष्टकेषीकामालानां तदन्तानां च (१९) पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात्। इष्टकचितम्। पक्वेष्टकचितम्। इषीकतूलम्। मुञ्जेषीकतूलम्। मालभारी (२०) उत्पलमालभारी।

कारे (२१) सत्यागदस्य।६।३।७०।

मुम् स्यात्। सत्यङ्कारः। अगदङ्कारः। अस्तोश्चेति वक्तव्यम्*। अस्तुङ्कारः (२२) धेनोर्भव्यायाम्*। धेनु(२३)

(१९) उत्तरपदाक्षिप्तं पूर्वपदं विशेष्यीकृत्य तदन्तविधिरित्याशयेनाह तदन्तानामिति।

(२०) मालां बिभर्तीति ताच्छील्ये णिनिः। [illegible] कारिणीति क्वचित् पाठः। अपो०

(२१) कारे [illegible] कर्मण्यण् [illegible] (७२१०४०) [illegible]ते। सत्यङ्कारः [illegible]। [illegible]ऽपि परत्वात् [illegible] बाधित्वा मुम्।

(२२) अस्तुङ्कारोऽस्तु वचनः। अस्त्विति तिङन्तप्रतिरूपकमव्ययम्।

(२३) धेनुर्भाव्या भव्या चेति विग्रहः भविष्यती धेनुरित्यर्थः। परनिपातः।

भव्या । लोकस्य पृणे * । लोकम्पृणः । पृण इति मूलविभुजादित्वात्(उ०२२५पृ०)कः । इत्येऽनभ्यासस्य । अनभ्यासमित्यः । दूरतः परिहर्त्तव्य इत्यर्थः । भ्राष्ट्राग्न्योरिन्धे * । भ्राष्ट्रमिन्धः । अग्निमिन्धः । गिलेऽगिलस्य * । तिमिङ्गिलः । अगिलस्य किम् । गिलगिलः । गिलगिले च । तिमिङ्गिलगिलः । उष्णभद्रयोः करणे * । उष्णङ्करणम् । भद्रङ्करणम् ।

## रात्रेः कृति विभाषा । ६ । ३ । ७२ ।

रात्रिञ्चरः रात्रिचरः । रात्रिमटः रात्र्यटः । अखिदर्थमिदं सूत्रम् खिति तु अरुर्द्विषदिति(उ०२१०पृ०)नित्यमेव वक्ष्यते रात्रिम्मन्यः ।

## सहस्य सः संज्ञायाम् । ६ । ३ । ७८ ।

उत्तरपदे । सपलाशम् । संज्ञायां किम् । सहयुध्वा ।

## ग्रन्थान्ताऽधिके च । ६ । ३ । ७९ ।

अनयोः परयोः सहस्य सः स्यादुत्तरपदे । समुहूर्त्तं (२४) ज्यौतिषमधीते । सद्रोणा खारी ।

## द्वितीये चाऽनुपाख्ये(२५)। ६ । ३ । ८० ।

---

(२४) समुहूर्त्तमित्यत्र वचनेऽव्ययीभावः मुहूर्त्तादिशब्दानां कालवाचितया अधिकानामपि तत्प्रतिपादकग्रन्थे कालत्वारोपेण प्रवृत्तेरव्ययीभावे चाकाले इति(२२८पृ०)निषेधादनेन सादेशः । ज्यौतिषमिति ज्योतिष इदमित्यर्थे अण् ।

(२५) उपाख्या प्रत्यक्षं तद्भिन्नेऽनुपाख्ये द्वितीये सहायवाचिन्युत्तरपदे इत्यर्थः । अप्रत्यक्षं सहायश्च द्वितीयशब्दार्थः ।

अनुमेये द्वितीये सहस्य सः स्यात् । सराक्षसीका निशा । राक्षसी साक्षादनुपलभ्यमाना निशयानुमीयते ।

**समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु । ६ । ३ । ८४ ।**

समानस्य सः स्यादुत्तरपदे न तु मूर्द्धादिषु । अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । योनः सनुत्यः । तत्र भव इत्यर्थे सगर्भसयूथसनुताद्यत् । अमूर्द्धादिषु किम् । समानमूर्द्धा । समानप्रभृतयः । समानोदर्काः । समानस्येति योगो विभज्यते । तेन सपक्षः साधर्म्यम् सजातीयमित्यादि सिद्धमिति काशिका । अथवा सहशब्दः सदृशवचनोऽस्ति । सदृशः सख्या ससखीति यथा । तेनायमस्वपदविग्रहो बहुव्रीहिः । समानः पक्षो यस्येत्यादि ।

**ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु । ६ । ३ । ८५ ।**

एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् । सज्योतिः(२१) । सजनपद इत्यादि ।

**चरणे ब्रह्मचारिणि । ६ । ३ । ८६ ।**

---

(२१) समानं ज्योतिरस्येति बहुव्रीहिः समानशब्दः समवायवचनः । यस्मिन् ज्योतिषि आदित्ये चन्द्रे वा उपनिपतितं तदस्तमयपर्य्यन्तमध्ययनवर्जनानु-नयीयादि सज्योतिरित्युच्यते ।

ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने। चरणः शाखा, ब्रह्म वेदः तदध्ययनार्थं व्रतमपि ब्रह्म। तच्चरतीति ब्रह्मचारी। समानः सः (२७)। सब्रह्मचारी।

तीर्थे ये। ६। ३। ८७।

तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात्। सतीर्थ्यः एकगुरुकः। समानतीर्थे वासीति(१२४४०)यत्प्रत्ययः।

विभाषोदरे (२८)। ६। ३। ८८।

यादौ प्रत्यये विवक्षिते इत्येव। समानोदर्यः सोदर्यः।

दृग्दृशवतुषु। ६। ३। ८९।

सदृक्। सदृशः। दृक्षे चेति वक्तव्यम्*। सदृक्षः। वतुबुत्तरार्थः।

इदङ्किमोरीश्की। ६। ३। ९०।

दृग्दृश्वतुषु इदम ईश् किमः की स्यात्। ईदृक् ईदृशः। कीदृक् कीदृशः। वतूदाहरणं(११८४०)वक्ष्यते। दृक्षे चेति वक्तव्यम्*। ईदृक्षः। कीदृक्षः। आ सर्वनाम्नः (१८४४०)दृक्षे च*।

---

(२७) स इति ब्रह्मचारीत्यर्थः तत्र समानत्वं वेदस्य व्रतस्य वा समानत्वात् समानवेदाध्ययननिमित्तव्रतचारीत्यर्थः।

(२८) सोदरसोदर्यशब्दौ तु समानमुदरं यस्येति विग्रहे बहुव्रीहिणा समासे सोपसर्जनमध्येतनेन(४।१४४०)यादेशात् सिद्धौ।

तादृक् तादृशः । तावान् । तादृक्षः । दीर्घः, मत्वोत्त्वे । अमू-दृशः अमूदृक् अमूदृक्षः ।

**समासेऽङ्गुलेः सङ्गः । ८ । ३ । ८० ।**

अङ्गुलिशब्दात्सङ्गस्य मूर्धन्यः स्यात्समासे । अङ्गुलिषङ्गः । समासे किम् । अङ्गुलेः सङ्गः ।

**भीरोः स्थानम् । ८ । ३ । ८१ ।**

भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात्समासे । भीरुष्ठानम् । असमासे तु । भीरोः स्थानम् ।

**ज्योतिरायुषस्तोमः । ८ । ३ । ८३ ।**

आभ्यां स्तोमस्य सस्य मूर्धन्यः समासे । ज्योतिष्टोमः । आयुष्टोमः । समासे किम् ज्योतिषः स्तोमः ।

**सुषामादिषु (२९) च । ८ । ३ । ९८ ।**

सस्य मूर्धन्यः । शोभनं साम यस्य सुषामा । सुषन्धिः ।

**एति संज्ञायामगात् । ८ । ३ । ९९ ।**

सस्य मूर्धन्यः । हरिषेणः । एति किम् हरिसक्थम् । संज्ञा-

---

(२९) सुषामा निःषामा दुःषामा सुषेधः निःषेधः दुःषेधः सुषन्धिः निःष-न्धिः दुःषन्धिः सुष्ठु दुष्ठु गौरिषक्थः (संज्ञायाम्) प्रतिष्णिका जला-षाहम् नौषेचनम् दुन्दुभिषेवणम् (एतिसंज्ञायामगात्) हरिषेणः (नक्षत्राद्वा) रोहिणीषेणः आकृतिगणोऽयम् सुषामादिः । एति संज्ञा यामगादि सूत्रद्वयं गणसूत्रमेव गणपाठे तद्द्वयं प्रमादेन लिखितम्

यां किम् पृथुसेनः। अगकारात्किम् विष्वक्सेना। इण्को (९५पृ०) रित्येव सर्व्वसेनः।

**नक्षत्राद्वा। ८। ३। १००।**

एति सस्य संज्ञायामगकारान्मूर्द्धन्यो वा। रोहिणीषेणः रोहिणीसेनः। अगकारात्किम् शतभिषक्सेनः। आकृतिगणोऽयम्।

**अषष्ठ्यतृतीयास्थस्याऽन्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु। ६। ३। ९९।**

अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु। अन्यदाशीः। अन्यदाशा। अन्यदास्था। अन्यदास्थितः। अन्यदुत्सुकः। अन्यदूतिः। अन्यद्रागः। अन्यदीयः। अषष्ठीत्यादि किम् अन्यस्याऽन्येन वाशीः अन्याशीः। कारके छे च नायन्निषेधः। अन्यस्य कारकः अन्यत्कारकः। अन्यस्यायम् अन्यदीयः। गहादेराकृति(५६६पृ०)गणत्वाच्छः।

**अर्थे विभाषा। ६। ३। १००।**

अन्यदर्थः अन्यार्थः।

**कोः कत्तत्पुरुषेऽचि। ६। ३। १०१।**

अजादावुत्तरपदे। कुत्सितोऽश्वः कदश्वः। कदन्नम्। तत्पुरुषे किम् कूष्ट्रो राजा। त्रौ च *। कुत्सितास्त्रयः कत्त्रयः।

**रथवदयोश्च। ६। ३। १०२।**

कद्रथः। कद्वदः।

**तृणे च जातौ। ६। ३। १०३।**

कत्तृणम्।

**का पथ्यक्षयोः। ६। ३। १०४।**

कापथः। काक्षः। अक्षशब्देन तत्पुरुषः। अक्षिशब्देन बहुव्रीहिर्वा।

**ईषदर्थे। ६। ३। १०५।**

ईषज्जलम् काजलम्। अजादावपि परत्वात्कादेशः। काम्लम्।

**विभाषा पुरुषे। ६। ३। १०६।**

कापुरुषः—कुपुरुषः। अप्राप्तविभाषेयम्। ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव। ईषत्पुरुषः कापुरुषः।

**कवं चोष्णे। ६। ३। १०७।**

उष्णशब्दे उत्तरपदे कवं का च वा स्यात्। कवोष्णम्—कोष्णम्—कदुष्णम्।

**पृषोदरादीनि(२०)यथोपदिष्टम्। ६। ३। १०८।**

---

(२०) पृषोदर पृषोत्थान बलाहक जीमूत श्मशान उलूखल पिशाच बृसी मयूर। पृषोदरादिराकृतिगणः।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।

धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्।

एतच्च यथायथमस्मिन्नेवेति सिद्धमेव न, प्राचीनकारिकायां वर्णविकारा-दिवक्तव्यतामपि पृषोदरादिष्वेव सिद्धान्तः।

पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः । पृषत् उदरम् पृषोदरम् । तलोपः । वारिवाहको बलाहकः । पूर्व्वपदस्य बः उत्तरपदादेश्च लत्वम् ।

भवेद्वर्णागमात् हंसः (२१) सिंहो वर्णविपर्य्ययात् ।
गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥ १ ॥

दिक्शब्देभ्यस्तीरस्य तारभावो वा ग० । दक्षिणतारम्-दक्षिणतीरम् । उत्तरतारम्—उत्तरतीरम् । दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेष्टुत्वञ्च ग० । दुःखेन दाश्यते दूडाशः । दुःखेन नाश्यते दूणाशः । दुःखेन दभ्यते दूडभः । खल्-निभ्यः । दम्भेर्नलोपो निपात्यते । दुष्टं ध्यायतीति । दूढ्यः । आतश्चेति (उ॰१०पू॰)कः । ब्रुवन्तोऽस्यां सीदन्तीति बृसी । ब्रुवच्छब्दस्य बृ आदेशः । सदेरधिकरणे डट् । आकृतिगणोऽयम् ।

---

(२१) हन्तेः पचाद्यचि वर्णागमे हंस इति हिंसेस्तु पचाद्यचि हकारसका-रयोः स्थानव्यत्ययात् सिंह इति गूढोत्मेत्यत्र आकारविकृत्या उ-कारादेशः पृषोदरमित्यत्र तकारवर्णलोपः इत्येवं रीत्या वर्णन बोध्यम् । एतन्मूलकमेव ।

कुम्भेरवग्रहः [illegible] वामनमतोरपि ।
[illegible] वा विततयोर्मिथश्च पचि कुम्भकोरिति ।

अम इति शेषः ... उत्तरपदे ... मकारः कुर्मेत् । ... परतः ... । ... विततय-द्वयोः परतः वर्णोऽन्यो मकारो कुर्मेत् । ... वन्यतः । ... परे ... आकारो कुर्मेत् । ... इत्यादि ।

**संहितायाम् । ६ । ३ । ११४ ।**

अधिकारोऽयम् ।

**कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य । ६ । ३ । ११५ ।**

कर्णशब्दे परे लक्षणवाचकस्य दीर्घः । द्विगुणाकर्णः । लक्षणस्य किम् शोभनकर्णः । अविष्टादीनाङ्किम् विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ।

**नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ । ६ । ३ । ११६ ।**

क्विबन्तेषु परेषु पूर्व्वपदस्य दीर्घः । उपानत् । नीवृत् । प्रावृट् । मर्म्माவित् । नीरुक् । अभीरुक् । ऋतीषट् । परीतत् । क्वाविति किम् परिणहनम् । विभाषा पुरुष(४७६पृ० सूत्रतो मण्डूकप्लुत्या विभाषाऽनुवर्त्तते । सा च व्यवस्थिता । तेन गतिकारकयोरेव नेह । पटुरुक् । तिग्मरुक् ।

**वनगिर्य्योः संज्ञायाङ्कोटर(१२)किंशुलुकादी-(१३)नाम् । ६ । ३ । ११७ ।**

---

(१२) कोटर मिश्रक सिध्रक पुरग सारिक । कोटरादिः ।

(१३) किंशुलुक शाल्व नड अञ्जन भञ्जन लोहित कुक्कुट । किंशुलुकादिः

कोटरादीनां वने परे किंशुलुकादीनाङ्गिरौ परे च दीर्घः स्यात् संज्ञायाम् ।

**वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः । ८ । ४ । ४ ।**

वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं नान्येभ्यः । इह कोटरान्ताः पञ्च दीर्घविधौ कोटरादयो बोध्याः । तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थः अग्रेशब्दस्य तु विध्यर्थः । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । सारिकावणम् । कोटरावणम् । एभ्य एवेति किम् असिपत्रवनम् । वनस्याग्रे अग्रेवणम् । राजदन्तादिषु(४१२४०)निपातनात्सप्तम्या अलुक् प्रातिपदिकार्थमात्रे प्रथमा । किंशुलुकागिरिः ।

**वले । ६ । ३ । ११८ ।**

वलप्रत्यये परे दीर्घः स्यात्संज्ञायाम् । आसीवलः ।

**मतौ बह्वचोऽनजिरादीनाम्(२४) । ६ । ३ । ११६ ।**

अमरावती । अनजिरादीनामिति किम् अजिरवती । बह्वचः किम् ब्रीहिमती । संज्ञायामित्येव । नेह वलयवती ।

**शरादीनाञ्च (२५) । ६ । ३ । १२० ।**

---

(२४) अजिर खदिर पुलिन हंस कारण्डव चक्रवाक । अजिरादिः ।

(२५) शर वंश धूम अहि कपि मणि मुनि शुचि हनु । शरादिः ।

मरावती।

**इको वहेऽपीलोः। ६। ३। १२१।**

इगन्तस्य दीर्घः स्याद्वहे। ऋषीवहम्। कपीवहम्। इकः किम् पिण्डवहम्। अपीलोः किम् पीलुवहम्। अपील्वादीनामिति वाच्यम् *। दारुवहम्।

**उपसर्गस्य घञ्यमनुष्ये बहुलम्। ६। ३। १२२।**

उपसर्गस्य बहुलन्दीर्घः स्याद्घञन्ते परे न तु मनुष्ये। परीपाकः—परिपाकः। अमनुष्ये किम्। निषादः।

**इकः काशे। ६। ३। १२३।**

इगन्तस्योपसर्गस्य दीर्घः स्यात् काशे। वीकाशः नीकाशः इकः किम् प्रकाशः।

**अष्टनः संज्ञायाम्। ६। ३। १२५।**

उत्तरपदे दीर्घः। अष्टापदम्। संज्ञायाङ्किम्। अष्टपुत्रः।

**चितेः कपि। ६। ३। १२७।**

एकचितीकः।

**नरे संज्ञायाम्। ६। ३। १२९।**

विश्वानरः।

**मित्रे चर्षौ। ६। ३। १३०।**

विश्वामित्रः । ऋषौ किम् । विश्वमित्रो माणवकः । शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः * । श्वादन्तः । इत्यादि ।

**प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि । ८ । ४ । ५ ।**

एभ्यो वनस्य णत्वं स्यात् । प्रवणम् । कार्ष्यवणम् । इह षात्परत्वात् णत्वम् ।

**विभाषौषधिवनस्पतिभ्यः । ८ । ४ । ६ ।**

एभ्यो वनस्य णत्वं वा स्यात् । दूर्व्वावणम्—दूर्वावनम् । शिरीषवणम्—शिरीषवनम् (२६) । द्व्यच्त्र्यज्भ्यामेव * । नेह देवदारुवनम् । इरिकादिभ्यः (२७) प्रतिषेधो वक्तव्यः * । इरिकावनम् । मिरिकावनम् ।

**वाहनमाहितात् । ८ । ४ । ८ ।**

आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात् । इक्षुवाहणम् । आहितात्किम् । इन्द्रवाहनम् । इन्द्रस्वामिकं वाहनमित्यर्थः । वहतेर्ण्युटि वृद्धिरिहैव सूत्रे निपातनात् ।

---

(२६) वनस्पतिशब्दः वृक्षमात्रवाची न तु पारिभाषिकपुष्पशून्यफलवद्वृक्ष-मात्रपरस्तद्ग्रहणेनाह शिरीषवनमिति ।

(२७) ओषधित्वात् प्राप्तौ प्रतिषेधः । इरिका मिरिका तिमिरा । इरिका-दिराकृतिगणः ।

प्रेण्वन (४२) मित्यादौ तु क्षुभ्नादि(२८२पृ०) त्वान्न । युवादेर्न । रम्ययूना । परिपक्वानि । एकाजुत्तरपदे णः (१३८पृ०)(४३) नित्यमित्युक्तम् । वृत्रहणौ । हरिमानयतीति वा सा हरिमाणी । नुमि । क्षीरपाणि । विभक्तौ । क्षीरपेण । रम्यर्विणा (४४)

## कुमति (४५) च । ८ । ४ । १३ ।

कवर्गवत्युत्तरपदे प्राग्वत् । हरिकामिणौ । हरिकामाणि । हरिकामेण ।

## पदव्यवायेऽपि । ८ । ४ । ३८ ।

पदेन व्यवधानेऽपि (४६) णत्वं न स्यात् । माषकुम्भवापेन

---

एतच्च प्रत्याख्यातमित्यद्वैराह किन्त्विति णत्वार्थमपीति णत्वार्थमे-वेत्यर्थः ।

(४१) प्रेण्वनमित्यादौ त्विति प्रत्ययसम्बन्धिनो नस्यैव धातुमध्यवर्त्तिनुमोऽपि नस्य न णत्वमित्यर्थः ।

(४२) अनेकाजुत्तरपदार्थमिदम् । अत्र कवर्गवदुत्तरपदाभिप्रायं । तत्र विभक्त्यादिप्रकृतेव प्रत्यासत्त्यैकत्वाभावेऽपि णिलगमीत्याहित्या-दौ णत्वं भवत्येव विभक्तिप्रकृतेः समासत्वात् ।

(४४) रम्यविणेत्यत्राभवद्वार्त्तिकीं विभक्तिमाश्रित्य विग्रहवाक्ये पदत्वेऽपि पद-व्यवाये इति निषेधस्य न प्रवृत्तिः तत्र पदस्थित इति(४८४पृ०) वार्त्ति-केनवाच्यतया णत्वाभावातिरिक्ततद्भिन्नपदेन पदेन व्यवधाने न भवतीत्यर्थकत्वेनात्र तदाभावात् ।

(४५) कवर्गादिविशिष्टकत्वाभावः कवित्वादा कुमतीत्युक्तम् ।

(४६) निमित्तनिमित्तिनोर्मध्ये पदेन व्यवधाने इत्यर्थः । व्यवधायकपदं च णत्वांगविहितभिन्नपदत्वेन विशेषणीयमिति भावः ।

चतुरङ्गयोगेन । अतद्धित (४७) इति वाच्यम् * । आर्द्रगोमयेण । शुष्कगोमयेण ।

### कुस्तुम्बुरूणि जातिः । ६ । १ । १४३ ।

अत्र सुट् निपात्यते । कुस्तुम्बुरुर्धान्यकम् । क्लीवत्वमतन्त्रम् । जातिः किम् । कुतुम्बुरूणि कुत्सितानि तिन्दुकीफलानीत्यर्थः ।

### अपरस्पराः क्रियासातत्ये । ६ । १ । १४४ ।

सुट् निपात्यते । अपरस्पराः सार्थाः गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः । क्रियेति किम् । अपरपरा गच्छन्ति अपरे च परे च सकृदेव गच्छन्तीत्यर्थः ।

### गोष्पदं सेवितासेवितप्रमाणेषु । ६ । १ । १४५ ।

सुट् षत्वञ्च निपात्यते । गावः पद्यन्तेऽस्मिन्देशे स गोभिः सेवितो गोष्पदः । असेविते । अगोष्पदान्यरण्यानि (४८) । प्रमाणे । गोष्पदमात्रं क्षेत्रं (४९) । सेवितेत्यादि किम् । गोःपदम् गोपदम् ।

---

(४७) अतद्धित इति व्यवधायकस्य षष्ठ्यन्तातिरिक्ततद्धितभिन्नपरत्वे निषेधः तद्धितपरत्वे तु भवत्येवेत्यर्थः ।

(४८) गवां सञ्चारो नैव यत्र कदाचित् तत्रैव न अपूर्वं झटिति भाष्ये स्थितमुदाहरणेन तदाह्यगोष्पदान्यरण्यानीति ।

(४९) क्षेत्रमिति क्षेत्रादिपरिमाणत्वेनैव द्योत्यते तेन क्षेत्रस्य गोष्पदाधिक्येऽपि न क्षतिः ।

आस्पदं प्रतिष्ठायाम् । ६ । १ । १४६ ।

आत्मयापनाय (५०) स्थाने सुट् निपात्यते । आस्पदम् । प्रेति किम् आपदापदम् ।

आश्चर्य्यमनित्ये । ६ । १ । १४७ ।

अद्भुते (५१) सुट् । आश्चर्य्यं यदि स भुञ्जीत । अनित्ये किम् आश्चर्य्यं कर्म शोभनम् ।

वर्चस्केऽवस्करः । ६ । १ । १४८ ।

कुत्सितं वर्चः वर्चस्कमन्नमलम् । तस्मिन् सुट् । अवकीर्य्यत इति अवस्करः । वर्चस्के किम् । अवकारः ।

अपस्करो रथाङ्गम् । ६ । १ । १४९ ।

अपकरोऽन्यः ।

विष्किरः शकुनिर्विकिरो वा । ६ । १ । १५० ।

पक्षे विकिरः । वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणमस्यापि शकुनेरन्यत्र प्रयोगो मा भूदिति हरदत्तस्तन्न भाष्यविरोधात् ।

---

(५०) आत्मयापनं शरीररक्षणमित्यर्थः तत्फलकस्थानलाभः प्रतिष्ठा । प्रकृते च लाभविषयः स्थानं तथा चास्पदमनेन लब्धमित्यस्य शरीररक्षणाय स्थानं लब्धमित्यर्थः ।

(५१) अनित्यस्य कादाचित्कत्वाऽद्भुतत्वमत आद्भुते इति ।

### प्रतिष्कशश्च कशेः। ६। १। १५२।

कश गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वञ्च। सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते। कशेः किम् प्रतिगतः कशां प्रतिकशोऽश्वः। यद्यपि कशेरेव कशा। तथापि कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम्। तेन धात्वन्तरोपसर्गान्न।

### प्रस्कण्वहरिश्चन्द्रावृषी। ६। १। १५३।

हरिश्चन्द्रग्रहणमनार्थम् (५१)। ऋषी इति किम् प्रकण्वो देशः। हरिचन्द्रो माणवकः।

### मस्करमस्करिणौ वेणुपरिव्राजकयोः। ६। १। १५४।

मकरशब्दोऽव्युत्पन्नः तस्य सुडिनिश्च निपात्यते। वेण्विति किम् मकरो ग्राहः। मकरी समुद्रः।

### कास्तीराजस्तुन्दे नगरे। ६। १। १५५।

ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरम्। अजस्येव तुन्दमस्येति अजस्तुन्दनाम नगरम्। नगरे किम् कातीरम्। अजतुन्दम्।

---

(५२) अनर्थकमिति [illegible] [illegible] हरिश्चन्द्रोऽनर्थक इत्यर्थः। (अ० ११४० ...) राजर्षिः। हरिश्चन्द्रो राजर्षिः।

कारस्करो वृक्षः । ६ । १ । १५६ ।

कारं करोतीति । कारस्करो वृक्षः । अन्यत्र कारकरः । केचित्तु कस्कादिष्विद(९८४०)म्पठन्ति न सूत्रेषु ।

पारस्करप्रभृतीनि च संज्ञायाम् ।६।१।१५७।

एतानि (५३) ससुट्कानि निपात्यन्ते नाम्नि । पारस्करः । किष्किन्ध्या । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च* । तात्पर्य्यं बलेन दकारो बोध्यः । तद्बृहतोर्ईकारतकारौ लुप्येते करपत्योस्तु सुट् चोरदेवतयोरिति समुदायोपाधिः । तस्करः । बृहस्पतिः (५४) । प्रायस्य चित्तिचित्तयोः* । प्रायश्चित्तिः । प्रायश्चित्तम् (५५) । वनस्पतिरित्यादि । आकृतिगणोऽयम् ।

इति समासाश्रयविधयः ।

---

(५३) पारं करोतीति कर्म्मण्येतताच्छील्येत्यादिना(७१२८६४०)टः । पारस्करो देशो नगरं वा । सोऽभिजनोऽस्य अण् पारस्करो ऋषिभेदः किष्कु प्रकाशा गुहा किष्किन्ध्या तस्करश्चोरः बृहस्पतिः सुराचार्य्यः । वनस्पतिर्वृक्षः । पारस्करादिराकृतिगणोऽयम् ।

(५४) बृहत्या वाचः पतिः बृहस्पतिः वाग्वै बृहती तस्या एव पतिरिति श्रुतेः

(५५) प्राय इत्याकारान्तमपुंलिङ्गं तपोवाची "प्रायोनाम तपः प्रोक्तं चित्तं निश्चय उच्यते" इति स्मृतेः ।

इति समासाश्रयप्रकरणम् ।

---

समर्थानां प्रथमाद्वा (१)। ४। १। ८२।

इदं पदत्रय(२)मधिक्रियते प्राग्दिश इति(१६०४सू०)यावत्। सामर्थ्यम् परिनिष्ठितत्वम् कृतसन्धिकार्यत्वमिति यावत्।

प्राग्दीव्यतोऽण्। ४। १। ८३।

तेन (३) दीव्यतीत्यतः(६०४सू०)प्रागणधिक्रियते।

अश्वपत्यादिभ्यश्च (४) ४। १। ८४।

एभ्योऽण् स्यात्। प्राग्दीव्यतीयेष्वर्थेषु (५) वक्ष्यमाणस्य ण्यस्यापवादः।

---

(१) अधस्तनसूत्रात् तद्धितप्रकरणमारभ्यते समर्थानामिति समर्थानां मध्ये सूत्रे प्रथमोपात्तात्प्रत्ययो वेदितव्यः स च वा। प्रथमत्वञ्च तत्तत्सूत्रे प्रथमोच्चारितशब्दप्रतिपाद्यत्वम्।

(२) पदत्रयमिति प्रत्येकं पदानां स्वरितत्वात्। वेत्यस्य तु प्राग्दिशइत्युत्तरमपि सम्बन्धः अवधिप्रदर्शनं तु विशिष्टस्य पदत्रिकस्येति बोध्यम्। तद्धितानामेकार्थीभाव एव प्रवृत्तिः समर्थः पदविधि(२१७सू०)रित्युक्तेरित्युक्ततः समर्थानामित्यस्योपादानान्तरं तथाच समर्थशब्दः शक्तपर्यायः शक्तत्वञ्चार्थप्रतिपादकत्वं तच्च परिनिष्ठितस्यैवेति तदाह परिनिष्ठितत्वमिति।

(३) प्राग्दीव्यत इत्यत्र तेन दीव्यतीतिसूत्रपठितदीव्यतिशब्दघटकदीव्यच्छब्दो ग्राह्य इत्याह तेनेति।

(४) अश्वपति शतपति धनपति गणपति स्थानपति यज्ञपति राष्ट्रपति कुलपति गृहपति धान्यपति पशुपति धर्मपति सभापति प्राणपति क्षेत्रपति। अश्वपत्यादिः।

(५) प्राग्दीव्यतीति प्रकरणे ये ये प्रत्यया यस्मिन् यस्मिन्नर्थे भवन्ति तेषु तेष्वर्थेष्वित्यर्थः।

**तद्धितेष्वचामादेः । ७ । २ । ११७ ।**

ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात् ।

**किति च । ७ । २ । ११८ ।**

किति च तद्धिते तथा । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् । गाणपत्यो (६) मन्त्र इति तु प्रामादिकमेव ।

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । ४ । १ । ८५ ।**

दित्यादिभ्यः पत्युत्तरपदाच्च(७)प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । अणोऽपवादः । दैत्यः (८) । अदितेरादित्यस्य वा आदित्यः । प्राजापत्यः । यमाच्चेति काशिकायाम् । याम्यः । पृथिव्या ञाञौ * । पार्थिवा पार्थिवी । देवाद्यञञौ * । दैव्यम् दैवम् । बहिषष्टिलोपो (९) यञ्च * । बाह्यः । ईकक् च * । वाह्लीकः । स्थाम्नोऽकारः * । अश्वत्थामः (१०)। पृषोदरा-

---

(६) गाणपत्य इति देवतार्थवाचकाद्गणपतिशब्दात्तिण्वत्त्वेन अणि तु तथा भवत्येवेति । मनो०

(७) पत्युत्तरपदादित्यनेन बहुपूर्वपदस्याख्यानात् अर्थात् अन्यथा पत्यन्तादित्ये-वोक्तं स्यात् तेन बहुपतिशब्दाच्चेति । मनो०

(८) दैत्य इति दितिशब्दात् अदित्यादिभ्यश्च इति(२१०पृ०)ङीपि कृते स्त्री-भ्योढगिति(५०६पृ०)दैतेय इति सिद्धम् ।

(९) बहिर्षष्टिलोपवचनमव्ययानां भमात्रे टिलोपनित्यत्वाभावार्थं तेनारा-तीय इत्यादौ न टिलोपः ।

(१०) अश्वस्येव स्थाम. बलं यस्येति बहुव्रीहौ पृषोदरादित्वात् सस्य तः ।

दित्वात्(४७६सू०) सस्य तः। भवार्थे तु लुग्वाच्यः*। अश्वत्थामा। लोम्नोऽपत्येषु बहुष्वकारः (११) *। बाह्वादीञो (४९८सू०) ऽपवादः। उडुलोमाः। उडुलोमान्। बहुषु किम् औडुलोमिः। गोरजादिप्रसङ्गे यत्(१२) *। गव्यम्। अजादिप्रसङ्गे किम् गोभ्यः हेतुभ्य आगतम् गोरूप्यम् गोमयम्।

## उत्सादिभ्योऽञ्(१३)। ४। १। ८६।

औत्सः। अग्निकलिभ्यां ढग्वक्तव्यः *। अग्नेरपत्यादि आग्नेयम्। कालेयम्। इत्यपत्यादि (१४) विकारान्तार्थसाधारणाः प्रत्ययाः।

---

(११) केवललोम्नोऽपत्येन योगाभावात् तदन्तेऽयं विधिः।

(१२) गोरिति न केवलमपत्य एव किन्तु प्राग्दीव्यतीयेषु सर्वेष्वपि तेन गोरिदं, गवि भवं, गौर्देवताऽस्येति सर्वत्र गव्यमित्येव।

(१३) उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन बष्कया (असे) पृथिवी धेनु पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकुण उदस्थान (देशे) पृषदंश भल्लकीय रथन्तर मध्यन्दिन बृहत् महत् सत्वत् कुरु पञ्चाल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण देव ग्रीष्मादच्छन्दसि। उत्सादिः।
अत्र बष्कया (असे) इति पठति [illegible] शाकटायनः [illegible] तु गौरवमिति [illegible] इति [illegible] तदन्तविधि-[illegible] तेन धेनुपङ्क्त्यादि [illegible] [illegible]जिति सिद्धम्। ग्रन्थे०

(१४) अपत्यादीत्यादिना अग्नेरागतमग्नौ [illegible] इदं [illegible] अग्नेरिद-[illegible] तेषां ग्रहणम्।

## स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।४।१।८७।

धान्यानाम्भवन (६५८सू०) इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमा-नञ्स्नञौ स्तः। स्त्रैणः। पौंस्नः। वत्यर्थे न स्त्रीपुंवच्चेति (४४५सू०)ज्ञापकात्। स्त्रीवत्। पुंवत्।

## द्विगोर्लुगनपत्ये ।४।१।८८।

द्विगोर्निमित्तं यस्तद्धितोऽजादिः(१५)अनपत्यार्थः प्राग्दीव्य-तीयस्तस्य लुक् स्यात्। पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः। द्विगुनिमित्तस्येति किम् पञ्चकपालस्येदम् पाञ्चकपालम्। अजादिः किम् पञ्चगर्गरूप्यम्। अनपत्ये किम् द्वयोर्मित्रयोरपत्यम् द्वैमित्रिः।

## गोत्रेऽलुगचि ।४।१।८९।

अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्याऽलुक् स्यात्। गर्गाणां छात्राः। वृद्धाच्छः (५६०सू०)।

## आपत्यस्य च तद्धितेऽनाति (१६)। ६।४। १५१।

---

(१५) अजादिरिति यत्रजीवत्सामात् गोत्रेऽलुगचीत्यतोऽचीत्यस्यापकर्षो-ऽनुवर्त्तते इति बोध्यम्।
गर्गेभ्यश्चागतादि वक्ति गार्ग्यभक्तम् इत्यादि बोध्यः

(१६) आपत्यस्येति किं सङ्काशादिभ्योऽण्यत्यये साङ्काश्यक इत्यादौ मा भूत् तद्धिते किं गार्ग्य इति स्थिते अपि मा भूत् अनातीति किं गार्ग्या-यण इत्यादौ मा भूत्।

